स्म्मान्द्वेष्ट्टिंयश्चं्वब्वयन्द्विष्म्मः ॥ २२ ॥ [२-५] हुविष्म्मंती
रिमाः ॥ हुविष्म्मंतीरिमाऽआपोहुविष्म्माँ २ ॥ ऽआविंवा
सति ॥ हुविष्म्मान्देुवोऽअंद्धुरोहुविष्म्माँ २ ॥ ऽअस्तुसूर्र्य्यं÷
॥ २३ ॥ अग्ग्नेर्व्वं÷ ॥ अग्ग्नेर्व्वोपन्नगृहस्युसदंसिसादयामीन्द्रा
ग्ग्न्योर्ब्भागुधेयीस्त्थमित्रावरुणयोर्ब्भागुधेयीस्त्थुविश्श्वेषान्देु
वानाम्भागुधेयीस्त्थ ॥ अमूर्ज्जाऽउपसूर्र्य्येयाभिर्व्वासूर्र्य्यं÷
सह ॥ तानोहिन्न्वन्त्वद्धुरम् ॥ २४ ॥ [२-६] हुदेत्त्वा ॥

3/2

हृदेत्त्वामनंसेत्त्वादिवेत्त्वासूर्य्यायत्त्वा ॥ ऊर्द्ध्वमिममंद्ध्वरन्दि
विदेवेषुहोत्त्रांसच्छ ॥ २५ ॥ सोमंराजन् ॥ सोमंराजन्विं
श्वास्त्त्वम्प्रजाऽउपावंरोहविंश्वास्त्त्वाँम्प्रजाऽउपावंरोहन्तु ॥
शृणोत्त्वग्निः समिधाहवंम्मेशृण्ण्वन्त्त्वापोधिषणांश्चदेवीः ॥
[2]श्रोताग्ग्रावाणोविदुषोनयज्ञꣳशृणोतुदेवः संविताहवंम्मेस्वाहा
॥ २६ ॥ देवीरापꣳ ॥ देवीरापोऽअपान्नपाद्योवंऽऊर्म्मिर्हविं ॥४७॥

१ अत्र विश्वाऽऊष्मान्तं परिद्विषस्त्वं त्वाम् (शु. य. प्रा. ४ अ. २७ सू.) इत्यनेन विश्वापदम् ऊष्मान्तं (सान्तम्) जाते विश्वास्त्वम् विश्वास्त्वाम् ।
२ श्रोताग्ग्रावाणः । पिबासोमम् (शु. य. प्रा. ३ अ. १२९ सू.) इत्यनेन श्रोत इति क्रियापदस्थह्रस्वाकारस्य दीर्घः ।

ष्ष्यऽइन्द्रियावान्मदिन्तंमः ॥ तन्देवेब्भ्योदेवत्राद्दत्तशुक्रपे
ब्भ्योयेषाम्भागस्त्थस्वाहा ॥ २७ ॥ कार्षिरसि ॥ कार्षिरसि
समुद्रस्य्त्वाक्षित्त्याऽउन्नयामि ॥ समापोऽअद्भिरंग्गमतसमो
षधीभिरोषधीः ॥ २८ ॥ यमंग्ने ॥ यमंग्नेपृत्सुमर्त्त्यमवा
व्वाजेषुयञ्जुनाः ॥ ससन्ताशश्वतीरिषःस्वाहा ॥ २९ ॥ [५-७]
देवस्यंत्त्वा ॥ देवस्यंत्त्वासवितुःप्प्रसवेश्विनोर्ब्बाहुब्भ्याम्पूष्णो
हस्त्ताब्भ्याम् ॥ आददेरावासिगभीरमिममध्वरङ्कृधीन्द्रायसु

सूतंमम् ॥ उत्तमेनंपविनोर्ज्जंस्वन्तम्मधुंमन्तम्पर्यंस्वन्तंनिग्ग्रा
॥४८॥ ब्भ्यास्त्थदेवश्श्रुतंस्तर्प्पयंतमामनोंमे ॥ ३० ॥ मनोंमे । तर्प्प ॥ ६ ॥
यतुव्वाचंम्मेतर्प्पयतप्प्राणम्मेंतर्प्पयतुचक्षुंम्मेंतर्प्पयतुश्श्रोत्रंम्मे
तर्प्पयतात्त्मानंम्मेतर्प्पयतप्प्रजाम्मेंतर्प्पयतपुशून्मेंतर्प्पयतग
णान्मेंतर्प्पयतगणामेमाव्वितृंषन् ॥ ३१ ॥ इन्द्रांयत्त्वा ॥ इन्द्रां
यत्त्वाव्वसुंमतेरुद्द्रवंतऽइन्द्रांयत्त्वादित्त्यवंतऽइन्द्रांयत्त्वाभिमा ॥४८॥
तिग्घ्ने ॥ श्येनायंत्त्वासोमभृतेग्नयेंत्त्वारायस्प्पोषदे ॥ ३२ ॥

यत्ते॑ । सोमदि॒विज्ज्योति॒र्यत्पृ॑थि॒व्याँ॒ऽयदु॒राव॒न्तरि॑क्षे । तेना॒
स्मै॒यज॑मानायो॒रुरा॒येकृ॒ध्ध्यधि॑दा॒त्रेव्वो॑चः ॥ ३३ ॥ श्वा॒त्रास्त्थ॑ ॥
श्वा॒त्रास्त्थ॑वृ॒त्र॒तुरो॒राधो॑गूर्त्ताऽअ॒मृत॑स्य॒पत्नीः॑ ॥ तादे॑वीर्दे॑व॒त्रे
मँ॒ऽय॒ज्ञन्न॑य॒तोप॑हू॒ताः॒सोम॑स्यपिबत ॥ ३४ ॥ माभेः ॥
माभे॒र्म्मासंवि॑क्क्था॒ऽऊर्ज्जं॑न्धत्स्व॒धिष॑णेव्वी॒ड्वीस॒तीव्वी॑डयेथा॒मू
र्ज्जं॑न्दधाथाम् ॥ पा॒प्प्माह॒तोनसोमः॑ ॥ ३५ ॥ प्रागपा॑
सं. ९ क् ॥ प्रागपा॒गुद॑गध॒राक्सर्व्व॑तस्त्त्वा॒दिश॒ऽआधा॑वन्तु ॥ अम्ब॒

निष्पंरसमुरीर्व्विदाम् ॥ ३६ ॥ त्वमुङ्ग ॥ त्वमुङ्गप्प्रशᳪ᳭सिषोदे॒वश्शंविष्ठुमर्त्त्यम् ॥ नत्त्वदुन्न्योमंघवन्नास्त्तिमर्ड्डितेन्द्र ब्ब्रवीमितेव्वचंः ॥ ३७॥ [ ८-८ ] इति श्रीवाजसनेयसंहितायां षष्ठोऽध्यायः ॥ ६ ॥ श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्रम् ॥ व्वाचस्पतयेत्रिको, पयामगृहीतोसित्रिका, वायोद्धिका, यंव्वांद्धिको, यावामेका, तंप्रत्कथाचतस्रो, ऽयंव्वेनस्त्रिका,

॥ ४९ ॥ ॥ ७ ॥ ॥ ४९ ॥

१ निष्पर अत्र निः इति विसर्गस्य आविर्निरिड इडाया वसतिर्वैरिवः (शु. य. प्रा. ३ अ. २३ सू.) इत्यनेन यथायोगं ककारपकारपरयोः विसर्जनीयस्य षकारः क्रियते इति षकारे कृते निष्परः । तत ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन पकारस्य द्वित्वम् ।

ये देवासस्त्रिका, इन्द्राय मूर्द्धानंद्विकौ, यस्तएका, प्राणायमे तिस्रो, मघवऽएकेन्द्राग्नीऽआगतमेका, घैको, मासऽएका, विश्वेदेवासऽआगतऽएके, न्द्रमरुत्वऽएका, मरुत्वन्तंवृषभमेका, मरुतान्त्वा, सजोषाऽइन्द्रऽएका, मरुत्वाँ २ ॥ ऽइन्द्रऽएका, महाँ २ ॥ ऽइन्द्रऽएका, महाँ २ ॥ ऽइन्द्रऽएको, द्वुत्यमष्टौ पंचविᳫंशतिरष्टाचत्वारिᳫंशत् [ अ. ७ मं. ४८ अनु. २५ ]

१ इति शतपथब्राह्मणपाठः ।

हरिः ॐ ॥ वाचस्प्पतये पवस्व वृष्णोऽअंशुब्भ्यां गभस्तिपूतः ॥
देवोदेवेब्भ्यः पवस्व येषाम्भागोऽसि ॥ १ ॥ मधुमतीर्न्नः ॥ मधुम
तीर्न्नऽइषस्कृधियत्तेसोमादाब्भ्यन्नामजागृवितस्मैतेसोमसो
मायस्वाहास्वाहोर्व्वन्तरिक्षमन्वेमिस्वाङ्कृतोसि ॥ २ ॥ स्वाङ्कृ
तोसि । विश्वेब्भ्यऽइन्द्रियेब्भ्योदिव्येब्भ्यः पार्थिवेब्भ्योमनं
स्त्वाष्टुस्वाहात्त्वासुभवसूर्य्यायदेवेब्भ्यस्त्वामरीचिपेब्भ्योदे ॥५०॥

१ वाचस्प्पतये अत्र प्रकृत्या कखयोः पफयोश्च (शु. य. प्रा. ३ अ. ११ सू.) इत्यनेन विसर्गस्य प्रकृतिभावे प्राप्ते पतितालव्यस्वरोदये (शु. य. प्रा. ३ अ. ३५ सू.) इत्यनेन पतिशब्दे परे विसर्जनीयस्य सकारे कृते ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन पकारस्य द्वित्वम् ।

वांᳪशोयस्म्मैत्त्वेडेतत्त्सत्त्यमुपरिप्प्रुताभङ्गेनहत्तोसौफट्प्रा
णायंत्त्वाव्यानायंत्त्वा ॥ ३ ॥ [ ३-१ ] उपयामगृहीतोसि ॥
उपयामगृहीतोस्यन्तर्य्यच्छमघवन्प्पाहिसोमम् ॥ उरुष्ष्यराय
ऽएषोयजस्व ॥ ४ ॥ अन्तस्त्ते ॥ अन्तस्त्तेद्यावापृथिवीदधा
म्म्यन्तर्द्दधाम्म्युर्व्वन्तरिक्षम् ॥ सजूर्द्देवेभिरवरैःपरैश्चान्तर्य्या
मेमघवन्मादयस्व ॥ ५ ॥ स्वाङ्कृतोसि ॥ स्वाङ्कृतोसिव्विश्वेब्भ्यऽ

---

१ अन्तस्त्ते । अत्र स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र (शु. य. प्रा. ४ अ. १०० सू.) इत्यनेन नकारस्य द्वित्वे प्राप्ते स्ववर्गीये चानुत्तमे (शु. य. प्रा. ४ अ. ११५ सू.) इत्यनेन स्ववर्गीये तकारे परे द्वित्वनिषेधान्न द्वित्वम् ।

इन्द्रियेभ्योंदिव्येभ्यः पार्त्थिवेभ्योमनंस्त्वाष्टुस्वाहात्त्वासु
भवसूर्य्यायदेवेभ्यंस्त्वामरीचिपेभ्यंऽउदानायंत्त्वा ॥ ६ ॥
[ ३-२ ] आवांयो ॥ आवांयो भूषशुचिपाऽउपंनःसहस्रंन्तेनि
युतोंविश्श्ववार ॥ उपोंतेऽअन्धोमद्यंमयामिसस्यंदेवदधिषेपूर्व्व
पेयंव्वायवेंत्त्वा ॥ ७ ॥ इन्द्रंवायूऽइमे । सुताऽउपप्प्रयोंभिराग
तम् ॥ इन्दंवोवामुशन्तिहि ॥ उपयामगृंहीतोसिव्वायवंऽइन्द्र[1] ॥५१॥

---

१ इन्द्रवायुभ्याम् । अत्र पूर्वौ द्वन्द्वेष्ववायुषु (शु. य. प्रा. ३ अ. १२८ सू.) इत्यनेन अवायौ द्वन्द्वसमासे पूर्वस्य पदान्तस्याकारस्य दीर्घविधानान्नात्रेन्द्रशब्दाकारस्य दीर्घाकारो वायुशब्दपरत्वात् ।

वायुभ्यान्त्वैषतेयोनिः सजोषोभ्यान्त्वा ॥ ८ ॥ [ २-३ ]
अयंव्वाम् ॥ अयंव्वाम्मित्रावरुणासुतः सोमऽऋतावृधा ॥ म
मेदिह श्रुतहवम् ॥ उपयामगृहीतोसिमित्रावरुणाभ्यान्त्वा
॥ ९ ॥ रायाव्वयम् ॥ रायाव्वयꣳससवाꣳसोमदेमहव्येनदेवा
यवसेनगावः ॥ तान्धेनुम्मित्रावरुणायुवन्नोव्विश्वाहाधत्तमन
पस्फुरन्तीमेषतेयोनिर्ऋतायुभ्यान्त्वा ॥ १० ॥ [ २-४ ]
यावाम् ॥ यावाङ्कशामधुमत्यश्विनासूनृतावती ॥ तया

सुज्ञाम्मिमिक्षतम् ॥ उपयागृंहीतोस्याश्विभ्यान्त्वैषतेयोनि
र्म्माद्ध्वीभ्यान्त्वा ॥ ११ ॥ [ १-५ ] तम्प्रत्क्कथा । पूर्व्व
थाव्विश्वथेमथाज्ज्येष्ठतातिम्बर्हिषदंᳪस्वर्व्विदम् ॥ प्रतीचीनं
वृजनन्दोहसेधुनिमाशुञ्जयन्तमनुयासुवर्द्धसे ॥ उपयामगृ
हीतोसिशण्डायत्त्वैषतेयोनिर्व्वीरताम्पाह्यपमृष्टᳪशण्डोदेवा
स्त्वाशुक्क्रपाः प्प्रणयन्त्वनाधृष्टासि ॥ १२ ॥ सुवीरोव्वीरान् ॥
सुवीरोव्वीरान्प्प्रजनयन्परीह्यभिरायस्प्पोषेणयजमानम् ॥

सञ्जग्ग्मानोदिवापृथिव्व्याशुक्कश्शुक्कशोचिषानिरस्त्तश्शण्डः
शुक्कस्याधिष्ठानमसि ॥१३॥ अच्छिन्नस्यते । देवसोमसुवीर्य्य
स्यरायस्प्पोषस्यददितारः स्याम ॥ साप्प्रथमासँस्कृतिर्व्विश्ववा
रासप्प्रथमोव्वरुणोमित्त्रोऽअग्निः ॥१४॥ सप्प्रथमः ॥ सप्प्रथमो
बृहस्प्पतिश्[1]चिकित्त्वाँस्त्तस्म्माऽइन्द्रायसुतमाजुहोतस्वाहा ॥
[2]तृम्पन्तुहोत्त्रामद्ध्वोयाःस्विष्टायाःसुप्प्रीताःसुहुतायत्स्वाहाया

१ तथयोः सम् (शु. य. प्रा. ३ अ. १३६ सू.) इत्यनेन नकारस्य सकारे अनुनासिकमुपधा प्रागन्तस्थायाः (शु. य. प्रा. ३ अ. १३१ सू.) इत्यनेन चोपधायामनुनासिके कृते रूपम् । नात्र धामञ्छत्रून् (शु. य. प्रा. ३ अ. १४६ सू.) इति निषेधस्त्वंपरत्वाभावात् ॥ २ तृम्पन्तु होत्राः । अत्र ऋषरेभ्यः (शु. य. प्रा. ३ अ. ८५ सू.) इत्यनेन समानपदे विधीयमानं णत्वं प्राप्तं परञ्च तवर्गे च (शु. य. प्रा. ३ अ. ९४ सू.) इत्यनेन निषेधान्न णत्वम् ।

डुग्गीत् ॥ १५ ॥ [ ४-६ ] अयंव्वेनः ॥ अयंव्वेनश्चोदय
त्पृश्निगर्ब्भाज्ज्योतिर्ज्जरायूरजंसोव्विमाने ॥ इममपाठंसङ्गमे
सूर्य्यस्यशिशुन्नव्विप्प्रामतिभीरिहन्ति ॥ उपयामगृहीतोसिम
र्क्कायत्त्वा ॥ १६ ॥ मनोन । येषुहवंनेषुतिग्ग्मंव्विपठंशच्याव्वनु
थोद्द्रवन्ता ॥ आयःशर्य्याभिस्तुविनृम्म्णोऽअस्याश्श्रीणीता
दिशङ्गभंस्त्तावेषतेयोनिः प्प्रजाःपाह्यपमृष्टोमर्क्कोदेवास्त्वाम
न्थिपाःप्प्रणंयन्त्वनाधृष्टासि ॥ १७ ॥ सुप्प्रजाः । प्प्रजाः

प्प्रंजनयन्न्परीह्यभिरायस्प्पोषैणयजमानम् ॥ सञ्जग्गमानो
दिवापृथिव्यामन्थीमन्थिशोचिषानिरस्त्तोमक्कौमन्थिनोधि
ष्ठानमसि ॥ १८ ॥ [३-७] येदेवासः ॥ येदेवासोदिव्येका
दशस्त्थपृथिव्यामध्येकादशस्त्थ ॥ अप्प्सुक्षितोमहिनैकादश
स्त्थतेदेवासोयज्ञमिमञ्जुषद्ध्वम् ॥ १९ ॥ उपयामगृहीतोसि ॥
उपयामगृहीतोस्याग्ग्रयणोसिस्वाग्ग्रयणः पाहियज्ञम्पाहियज्ञ
पतिंव्विष्णुस्त्वामिन्द्रियेणपातुव्विष्णुन्त्वम्पाह्यभिसवना

निपाहि ॥ २० ॥ सोमः॒ पवते ॥ सोमः॑ पवते॒ सोमः॑ पवते॒स्मै
ब्रह्म॑णे॒स्मै क्ष॒त्राया॒स्मै सु॑न्व॒ते यज॑मानाय पवत॒ऽइ॒षऽऊ॒र्ज्जे॑ प
व॒ते॒द्भ्यऽओष॑धीभ्य॒ᳬ पव॒ते॒ द्यावा॑पृथि॒वीभ्यां॑ पवते सुभू॒ताय॑
पव॒ते॒ विश्वे॑भ्य॒स्त्वा दे॒वेभ्यं॑ऽए॒ष ते॒ योनि॒र्विश्वे॑भ्य॒स्त्वा दे॒वे
भ्यः॑ ॥ २१ ॥ [ ३-८ ] उ॒प॒या॒मगृ॑ही॒तो॒सीन्द्रा॑य त्वा बृ॒हद्व॑
ते॒ वय॑स्वतऽउक्थ॒व्य॒ङ्गृ॒ह्णामि ॥ यत्त॑ऽइन्द्र बृ॒हद्व॒य॒स्तस्मै॑
त्वा॒ विष्ण॑वे त्वै॒ष ते॒ योनि॑रु॒क्थेभ्यं॑स्त्वा दे॒वेभ्यं॑स्त्वा देवा॒व्यँ॒

ऽस्यज्ञस्यायुषेगृह्णामिमित्रावरुणाभ्यान्त्वा ॥ २२ ॥ मित्रा
वरुणाभ्यान्त्वा । देवाव्यँऽस्यज्ञस्यायुषेगृह्णामीन्द्रायत्त्वादेवा
व्यँऽस्यज्ञस्यायुषेगृह्णामीन्द्राग्निभ्यान्त्वादेवाव्यँऽस्यज्ञस्यायु
षेगृह्णामीन्द्रावरुणाभ्यान्त्वादेवाव्यँऽस्यज्ञस्यायुषेगृह्णामी
न्द्राबृहस्पतिभ्यान्त्वादेवाव्यँऽस्यज्ञस्यायुषेगृह्णामीन्द्रावि
ष्णुभ्यान्त्वादेवाव्यँऽस्यज्ञस्यायुषेगृह्णामि ॥ २३ ॥ [२-९]
सं. १० मूर्द्धानन्दिवः ॥ मूर्द्धानन्दिवोऽअरतिम्पृथिव्यावैश्वानरमृतऽ

आजातमग्निम् ॥ कविᳫंसम्राजमतिथिञ्जनानामासन्नापा
त्रञ्जनयन्तदेवाः ॥ २४ ॥ उपयामगृहीतोसि । ध्रुवोसिध्रुव
क्षितिर्ध्रुवाणान्ध्रुवतमोच्युतानामच्युतक्षित्तमऽएषतेयोनिर्वै
श्वानरायत्त्वा ॥ ध्रुवन्ध्रुवेणमनसावाचासोममवनयामि ॥ अथा
नऽइन्द्रऽइद्विशोसपत्नाःसमनसस्करत् ॥ २५ ॥ [२-१०] यस्ते
द्रप्सस्कन्दतियस्तेऽअᳫंशुर्ग्रावच्युतोधिषणयोरुपस्थात् ॥ ॥५५॥
अध्वर्य्योर्वापरिवायःपवित्रात्तन्तेजुहोमिमनसावषट्कृतᳫंस्वा

हादेवानांमुत्क्रमणमसि ॥ २६ ॥ [ १-११ ] प्राणायमे । व्वर्चो
दाव्वर्च्चसेपवस्वव्यानायमेव्वर्च्चोदाव्वर्च्चसेपवस्वोदानायमेव्वर्च्चोदा
वर्च्चसेपवस्वव्वाचेमेव्वर्च्चोदाव्वर्च्चसेपवस्वक्रतुदक्षाभ्याम्मेव्वर्च्चो
दाव्वर्च्चसेपवस्वश्रोत्रायमेव्वर्च्चोदाव्वर्च्चसेपवस्वचक्षुर्भ्याम्मेव्व
र्च्चोदसौव्वर्च्चसेपवेथमात्मनेमे ॥ २७ ॥ आत्मनेमे । व्वर्च्चोदा
व्वर्च्चसेपवस्वौजसेमेव्वर्च्चोदाव्वर्च्चसेपवस्वायुषेमेव्वर्च्चोदाव्वर्च्चसेपव
स्वव्विश्वाभ्योमेप्रजाभ्योव्वर्च्चोदसौव्वर्च्चसेपवेथाम् ॥ २८ ॥

कौसि । कतुमोसि कस्यासि कोनामासि ॥ यस्यते नामामन्म
हि यन्त्वा सोमेनातीतृपाम ॥ भूर्भुवः स्वः सुप्रजाः प्रजाभिः
स्याᳪं सुवीरो वीरैः सुपोषः पोषैः ॥ २९ ॥ [३-१२] उपयाम
गृहीतोसि मधवे त्वोपयामगृहीतोसि माधवाय त्वोपयामगृ
हीतोसि शुक्राय त्वोपयामगृहीतोसि शुचये त्वोपयामगृहीतो
सि नभसे त्वोपयामगृहीतोसि नभस्याय त्वोपयामगृहीतोसीषे ॥५६॥
त्वोपयामगृहीतोस्यूर्जे त्वोपयामगृहीतोसि सहसे त्वोपयामगृ

हीतोसिसहस्स्यायत्त्वोपयामगृंहीतोसितपंसेत्त्वोपयामगृंहीतो
सितपस्स्यायत्त्वोपयामगृंहीतोस्यꣳहसस्प्पतयैंत्त्वा ॥ ३० ॥
[ १-१३ ] इन्द्राग्ग्नीऽआगंतम् ॥ इन्द्राग्ग्नीऽआगंतꣳसुतङ्गी
र्ब्भिर्न्नभोव्वरेंण्ण्यम् ॥ अस्यपातन्धियेषिता ॥ उपयामगृंहीतो
सीन्द्राग्ग्निब्भ्यान्त्वैषतेयोनिरिन्द्राग्ग्निब्भ्यान्त्वा ॥ ३१ ॥
[ १-१४ ] आघं ॥ आघायेऽअग्ग्निमिन्धतेस्तृणन्तिबर्हिरानु

---

१ आघाये । अत्र अथोदारिथशोचपनयसादयर्जुवृषशत्रुसलक्ष्माघाघारात्पूभवत यकारे (शु. य. प्रा. ३ अ. ११३ सू.) यकारे परे एते दीर्घा भवन्ति । तेन घ इत्यस्याकारस्य दीर्घः । एवम् अघायतः इत्यत्रापि दीर्घः ।

षक् ॥ येषामिन्द्रोसुवासखां ॥ उपयामगृहीतोस्यग्नीन्द्रा
ब्भ्यान्त्वैषतेयोनिरग्नीन्द्राब्भ्यांन्त्वा ॥ ३२ ॥ [ १-१५ ]
ओमांसश्चर्षणीधृतः[1] ॥ ओमांसश्चर्षणीधृतोव्विश्वेदेवासऽआ
गंत ॥ दाश्वाꣳसोदाशुषः सुतम् ॥ उपयामगृहीतोसिव्विश्वे
ब्भ्यस्त्वादेवेब्भ्यंऽएषतेयोनिर्व्विश्वेब्भ्यस्त्वादेवेब्भ्यंः ॥ ३३ ॥
[ १-१६ ] व्विश्वेदेवासः ॥ व्विश्वेदेवासऽआगंतशृणुतामंऽइमꣳ[2]

१ अत्र पिबासोमम् । ( शु. य. प्रा. ३ अ. १२९ सू. ) इत्यनेन चर्षणिशब्दस्येकारस्य दीर्घे चर्षणीधृतः । २ शृणुत मऽइमम् । अत्र शृणुतत्विपिब्रजिभवतपिबेतस्रतिष्ठरक्षा मकारे ( शु. य. प्रा. ३ अ. ११७ सू. ) इत्यनेन मकारे परे एते दीर्घा भवन्ति । इति तकारस्य दीर्घे शृणुतामऽइमम् ।

हवम् ॥ एदम्बर्हिर्न्निषीदत ॥ उपयामगृहीतोसिव्विश्वेब्भ्य
स्त्वादेवेब्भ्यऽएषतेयोनिर्व्विश्वेब्भ्यस्त्वादेवेब्भ्यः ॥ ३४ ॥
[१-१७] इन्द्रमरुत्त्वꣳ ॥ इन्द्रमरुत्त्वऽइहपाहिसोमँय्यथा
शार्य्यातेऽअपिबꣳसुतस्य ॥ तवप्प्रणीतीतवशूरशर्म्मन्नाविवा
सन्तिकवयःसुयज्ञाः ॥ उपयामगृहीतोसीन्द्रायत्त्वामरुत्त्व
तऽएषतेयोनिरिन्द्रायत्त्वामरुत्त्वते ॥ ३५ ॥ [१-१८] मरु
त्वन्तंव्वृषभं । व्वावृधानमकवारिन्दिव्यꣳशासमिन्द्रम् ॥

१ बर्हिर्न्निषीदत अत्र निःसीदत इति पदम् । अत्र नेः सीदतेः ( शु. य. प्रा. ३ अ. ५६ सू. ) इत्यनेन नेः परस्य सीदतेत्यत्रस्थसकारस्य षकारः ।

॥ ५८ ॥ विश्वासाहमवसेनूतनायोग्रᳪसहोदामिहतᳪहुवेम ॥ उप

॥ ७ ॥ यामगृहीतोसीन्द्रायत्त्वामरुत्वतऽएषतेयोनिरिन्द्रायत्त्वामरु

त्त्वते ॥ [२] [१-१९] उपयामगृहीतोसिमरुतान्त्वौजसे ॥३६॥

[१-२०] सजोषाऽइन्द्र ॥ सजोषाऽइन्द्रसगणोमरुद्भिᳪ

सोमम्पिबवृत्रहाशूरविद्वान् ॥ [३] जहिशत्रूँ १ ॥ रपमृधोनुद

स्वाथाभयङ्कृणुहिविश्वतोनᳪ ॥ उपयामगृहीतोसीन्द्रायत्त्वा ॥ ५८ ॥

१ विश्वासाहम्। अत्र विश्वशब्दाकारस्य विश्वसहभुवपुषवसुषु (शु. य. प्रा. ३ अ. १०१ सू.) इत्यनेन सहपरे दीर्घाकारः। २ (इति शतपथे)। ३ शत्रूँ १ ॥ रपमृधः। अत्र स्वर औपशविः (शु. य. प्रा. ३ अ. १३२ सू.) इत्यनेन नकारस्य स्वरे परे अनुस्वारे उपधायामनुनासिक्ये च रूपम्।

मरुत्त्वतऽएषतेयोनिरिन्द्रायत्त्वामरुत्त्वते ॥ ३७ ॥ [ १-२१ ]
मरुत्त्वाँ[1] २ ॥ ऽइन्द्र । वृषभोरणायपिबासोमंमनुष्ष्वधम्म
दाय ॥ आसिञ्चस्वजठरेमद्ध्वऽऊर्म्मिन्त्वꣳराजासिप्प्रतिपत्त्सु
तानाम् ॥ उपयामगृहीतोसीन्द्रायत्त्वामरुत्त्वतऽएषतेयोनि
रिन्द्रायत्त्वामरुत्त्वते ॥३८॥ [१-२२] महाँ २ ॥ ऽइन्द्र÷ ॥
महाँ २ ॥ ऽइन्द्रोनृवदाचर्षणिप्प्राऽउतद्विबर्हाऽअमिनꣳसहो

---

१ मरुत्वान् इन्द्रः । अत्राकारोपधो यकारम् (शु. य. प्रा. ३ अ. १४३ सू.) इत्यनेन स्वरे परे नकारस्य यकारे कृते उपधायामनुनासिक्ये च यवयोः पदान्तयोः स्वरमध्ये लोपः (शु. य. प्रा. ४ अ. १२५ सू.) इत्यनेन यकारलोपे न परकाल० (शु. य. प्रा. ३ अ. ४ सू.) इत्यनेन सन्धेर्निषेधः । तथैव महाँ २ इन्द्रः ।

भिदं ॥ अस्म्मद्र्य्यग्ग्वावृधेव्वीर्य्यायोरुःपृथुःसुकृतंकर्तृभिं
॥५९॥ र्ब्भूत् ॥ उपयामगृहीतोसिमहेन्द्रायत्त्वैषतेयोनिर्म्महेन्द्राय ॥ ७ ॥
त्त्वा ॥ ३९॥ [ १-२३ ] महाँ २॥ ऽइन्द्रः ॥ महाँ २॥ ऽइन्द्रो
यऽओजसापर्ज्जन्न्योव्वृष्टिमाँ २॥ ऽइव ॥ स्तोमैर्व्वत्सस्यव्वावृधे ॥
उपयामगृहीतोसिमहेन्द्रायत्त्वैषतेयोनिर्म्महेन्द्रायत्त्वा ॥४०
[ १-२४ ] उदुत्त्यम् ॥ उदुत्त्यञ्जातवेदसन्देवंव्वहन्तिकेतवः ॥ ॥५९।

---

१ कर्तृभिः । अत्र परंतु रेफहकाराभ्याम् (शु. य. प्रा. ४ अ. १०१ सू.) इत्यस्यापवादभूतेन ऊष्मान्त. (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन तकारस्य द्वित्वे प्राप्ते ऋवर्णे च (शु. य. प्रा. ४ अ. १११ सू.) इत्यनेन ऋवर्णे परे व्यञ्जनस्य द्विर्भावनिषेधान्न द्वित्वम् । एतादृशेष्वन्येष्वपि बोध्यम् ।

द्दृशोव्विश्वायुसूर्य्युँ स्वाहा ॥४१॥ चित्रन्देवानाम् ॥ चित्रन्देवा
नामुदंगादनीकञ्चक्षुर्म्मित्रस्यव्वरुणस्याग्नेः ॥ आप्राद्यावा
पृथिवीऽअन्तरिक्षु सूर्य्यऽआत्माजगतस्तस्थुषश्च स्वाहा
॥ ४२ ॥ अग्नेनय । सुपथारायेऽअस्म्मान्विश्वानिदेवव्वयुना
निव्विद्वान् ॥ युयोद्ध्यस्म्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽउ
क्तिंव्विधेमस्वाहा ॥ ४३ ॥ अयन्नः ॥ अयन्नोऽअग्निर्व्वरि
वस्कृणोत्त्वयम्मृधः पुरऽएतुप्रभिन्दन् ॥ अयंव्वाजाञ्जयतुव्वा

 

जंसातावयꣳ शत्रूँञ्जयतुजर्हृषाणꣳस्वाहा ॥ ४४ ॥ रूपेणवꣳ ॥
रूपेणंवोरूपमुब्भ्यागान्तुथोवोविश्श्ववेदाविभंजतु ॥ ऋतस्य
पृथाप्प्रेतंचन्द्रदंक्षिणाविस्वꣳपश्श्यव्व्युन्तरिंक्षँय्यतस्वसदुस्यैः
॥ ४५ ॥ ब्राह्मणमद्य । विदेयम्पितृमन्तम्पैतृमत्त्यमृषिमा
षेयꣳसुधातुंदक्षिणम् ॥ अस्म्मद्द्राताद्देवत्राग्गच्छतप्प्रदातार
माविशत ॥ ४६ ॥ अग्नयेत्त्वा ॥ अग्नयेत्त्वामह्यंव्वरुणोददातु

१ विस्वः । अत्र वेर्युदयः (शु. य. प्रा. ३ अ. ६७ सू.) इत्यनेन वेः उपसर्गात्परस्य सकारस्य यकारोदये षकारो भवति। अतो नात्र सकारात्परस्य वकारोदयस्य वेरुपसर्गस्य सकारस्य षकारः ।

सो॒मृ॒तत्त्वम॑शीया॒यु॑र्द्दा॒त्र ऽए॑धि॒मयो॒मह्यम्प्र॑तिग्ग्रही॒त्रे रु॒द्द्राय॑
त्त्वा॒मह्य॒ँव्वरु॑णोददातु॒सो॒मृ॒तत्त्वम॑शीयप्प्रा॒णोदा॒त्र ऽए॑धि॒व्वयो॒
मह्यम्प्र॑तिग्ग्रही॒त्रे बृह॒स्प्पत॑येत्त्वा॒मह्य॑ँव्वरु॑णोददातु॒सो॒मृ॒तत्त्व
म॑शीय॒त्त्वग्ग्दा॒त्र ऽए॑धि॒मयो॒मह्यम्प्र॑तिग्ग्रही॒त्रे य॒माय॑त्त्वा॒मह्य॒ं
व्वरु॑णोददातु॒सो॒मृ॒तत्त्वम॑शीय॒हयो॑दा॒त्र ऽए॑धि॒व्वयो॒मह्यम्प्रति
ग्ग्रही॒त्रे ॥ ४७ ॥ कोदा॑त् ॥ कोदा॒त्कस्म्मा॑ ऽअदा॒त्कामो॑दा॒
त्कामा॑यादात् ॥ कामो॑दा॒ताकाम॑ः प्प्रतिग्ग्रही॒ताकामै॒तत्ते॑

सं. ३३

॥ ४८ ॥ [ ८-२५ ] इतिश्रीवाजसनेयसंहितायांसप्तमोऽध्यायः
॥ ७ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ उपयामगृ-
हीतोस्यादित्येभ्यः पंच, वाममद्यद्वे, सुशर्मास्येका, बृहस्प-
तिसुतस्यद्वे, हरिरसिचतस्रः, सामिन्द्रेऽष्टौ, माहिः पंच,
ऽएजतुदशमास्यः पंचा, तिष्ठैका, सुक्ष्वाह्येके, न्द्रामिदेका,
यस्मान्नद्वे, ऽग्नेपवस्वो, त्तिष्ठन्न, हृश्रमु, दुत्यमेकैका, जिघ्र
द्वे, विनइन्द्र, वाचस्पतिं, विश्वकर्मन्नेकैका, न्नयेत्वाचतस्र,

इहरतिस्तिस्रः, परमेष्ठीदश, त्रयोविꣳशतिस्त्रिषष्टिः ॥ [अ. ८ मं. ६३ अनु. २३] हरिः ॐ ॥ उपयामगृहीतोसि ॥ उपयामगृहीतोस्यादित्येभ्यस्त्वा ॥ विष्णऽउरुगायैषतेसोमस्तꣳरक्षस्वमात्त्वादभन् ॥ १ ॥ कदाचन । स्तरीरसिनेन्द्रसश्चसिदाशुषे ॥ उपोपेन्नुमघवन्भूयऽइन्नुतेदानन्देवस्यपृच्यतऽआदित्येभ्यस्त्वा ॥ २ ॥ कदाचन । प्रयुच्छस्युभेनिपासिजन्मनी ॥ तुरीयादित्यसवनन्तऽइन्द्रियमातस्थावमृतन्दि

भ्यादित्त्येभ्भ्यस्त्वा ॥ ३ ॥ सुज्ञोदेवानाम् ॥ सुज्ञोदेवाना
म्प्प्रत्त्येतिसुम्न्नमादित्त्यासोभवतामृडयन्त्तः ॥ आवोर्व्वाची
सुमतिर्व्ववृत्त्यादुंहोश्चिद्याववरिवोवित्तरासदादित्त्येभ्भ्यस्त्वा
॥ ४ ॥ व्विवस्वन्नादित्त्य ॥ व्विवस्वन्नादित्त्यैषतेसोमपीथस्त्त
स्म्मिन्म्मत्त्स्व ॥ श्रदस्म्मैनरोव्वचसेदधातनयदाशीर्दादम्पती
व्वाममश्नुतः ॥ पुमान्त्पुत्त्रोजायतेव्विन्दतेव्वस्वधाविश्वाहारपऽ
एधतेगृहे ॥ ५ ॥ [५-१] व्वाममद्य । सवितर्व्वाममुश्वोदिवे ॥ ६२ ॥

१ भवत मृडयन्तः । अत्र शृणुत्विविषिभ्रजिभवतपिबेतस्मतिष्ठरक्षा मकारे (शु. य. प्रा. ३ अ. ११७ सू.) इत्यनेन मकारे दीर्घे भवता मृडयन्तः ।

दिवेव्वाममुस्म्मब्भ्यंᳮसावीः ॥ व्वामस्युहिक्षयस्यदेवभूरेरयाधि
याव्वामभाजः स्याम ॥ ६ ॥ उपयामगृहीतोसि । सावित्त्रो
सिचनोधाश्चनोधाऽअसिचनोमयिधेहि ॥ जिन्वयज्ञञ्जिन्व
यज्ञपतिम्भगायदेवायत्त्वासवित्त्रे ॥ ७ ॥ [ २-२ ] शतम्
॥ ३०० ॥ उपयामगृहीतोसि । सुशर्म्मासिसुप्प्रतिष्ठानोबृहदु
क्षायनमः ॥ व्विश्वेब्भ्यस्त्वादेवेब्भ्यऽएषतेयोनिर्व्विश्वेब्भ्य
स्त्वादेवेब्भ्यः ॥ ८ ॥ [ १-३ ] उपयामगृहीतोसि ॥ उप

॥ ६३॥ यामगृंहीतोसि[1]बृंहस्प्पतिंसुतस्यदेवसोमतऽइन्दोरिन्द्रियावतः पत्क्नींवतोग्ग्रहाँ २ ॥ ऽऋध्यासम् ॥ अहम्पुरस्त्तादुहमवस्त्ताद्यदुन्तरिंक्षुन्तदुमेपिताभूंत् ॥ अहꣳसूर्य्यमुभयतोददर्शाहन्देवानाम्परमङ्गुहायत् ॥ ९ ॥ अग्ना ३॥ ऽइपत्क्नीवन् ॥ अग्ना ३ ॥ ऽइपत्क्नींवन्त्सजूर्देवेनुत्त्वष्ट्रासोमम्पिबस्वाहा ॥ ॥ ८ ॥

॥ ६३ ॥ प्रजापतिर्वृषांसिरेतोधारेतोमयिंधेहिप्प्रजापतेस्त्तेवृष्णोरेतो

१ बृहस्प्पतिसुतस्य । अत्र भाविभ्यः सः षं समानपदे (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन सस्य षत्वे प्राप्ते अनुसन्तनोतु बृहस्पति० (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन समानपदे सस्य प्रकृतिभावविधानान्न षत्वम् । तत ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इति पकारस्य द्वित्वम् ।

धसौरेतोधामंशीय ॥ १० ॥ [२-४] उपयामगृहीतोसि ॥
उपयामगृहीतोसिहरिरसिहारियोजनोहरिब्भ्यान्त्वा ॥ हर्य्यौ
र्द्धानास्त्थसहसोमाऽइन्द्राय ॥ ११ ॥ यस्त्ते । ऽअश्श्वसनि
ब्भक्षोयोगोसनिस्त्तस्यंतऽइष्टयजुषस्त्तुतस्त्तोमस्यशस्त्तोक्त्थ
स्योपंहूतस्योपंहूतोभक्षयामि ॥ १२ ॥ देवकृतस्यैनंसꣳ ॥
देवकृतस्यैनंसोवयजंनमसिमनुष्ष्यकृतस्यैनंसोवयजंनमसिपि
तृकृतस्यैनंसोवयजंनमस्यात्त्मकृतस्यैनंसोवयजंनमस्येनंसऽए

१ गोसनिस्त. । भाविभ्यः लः षं समानपदे (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन षत्वप्राप्तौ अनुसन्त० (३ अ. ८२ सू.) इत्यनेन निषिध्यते।

नसोवयजंनमसि ॥ यच्चाहमेनोविद्वाँश्चकारयच्चाविद्वाँस्तस्य
सर्व्वस्यैनंसोवयजंनमसि॥१३॥ संवर्च्चसा॥ संवर्च्चसापयंसासन्त
नूभिरगंन्महिमनंसासꣳशिवेनं ॥ त्वष्टांसुदत्रोविदंधातुरायो
नुमार्ष्टुतन्वोयद्विलिष्टम्॥१४॥ [४-५] समिन्द्र। णोमनंसाने
षिगोभिःसꣳसूरिभिर्म्मघवन्त्सꣳस्वस्त्या ॥ सम्ब्रह्मंणादेव
कृतँयदस्तिसन्देवानांꣳसुमतौयज्ञियानाꣳस्वाहा ॥ १५ ॥



१ समिन्द्रणो । अत्र इन्द्र नः इति पदद्वयेन भाविभ्य० (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन समानपदत्वाभावाण्णत्वाप्राप्तौ निषण्णायरथवाहण। मिन्द्रऽएणस्परिणीयते समिन्द्रण० (शु. य. प्रा. ३ अ. ८३ सू.) इत्यनेन णत्वं निपात्यते ।




संव्वर्च्चसा ॥ संव्वर्च्चसापयसासन्तनूभिरगन्म्महिमनसासꣳशि
वेन। त्वष्टासुदत्रोव्विदधातुरायोनुमार्ष्टुतन्वोयद्विलिष्टम् ॥ १६ ॥
धातारातिः। सवितेदञ्जुषताम्प्रजापतिर्न्निधिपादेवोऽअग्निः ॥
त्वष्टाव्विष्णुःप्रजयासꣳरराणायजमानायद्रविणन्दधात
स्वाहा ॥ १७ ॥ सुगावः ॥ सुगावोदेवाःसदनाऽअकर्म्मयऽ
आजग्मेदꣳसवनञ्जुषाणाः ॥ भरमाणाव्वहमानाहवीꣳष्य
स्म्मेधत्तव्वसवोव्वसूनिस्वाहा ॥ १८ ॥ याँ २ ॥ ऽआवहः ॥



साँ २ ॥ ऽआवंहऽउशतोदेंवदेवाँस्त्तान्प्प्रेरंयस्वेऽअंग्नेसधस्त्थे ॥
जक्षिवाᳫंसं÷पपिवाᳫंस विश्श्वेसुंडम्र्मᳫंस्वरातिष्ठतानु
स्वाहां ॥ १९ ॥ वयᳫंहि । त्त्वांप्प्रयतियज्ञेऽअस्म्मिन्नग्नेहोतार
मवृंणीमहीह ॥ ऋधंगयाऽऋधंगुताशांमिष्ठाᳫंप्प्रजानन्न्यज्ञमु
पयाहिविद्वान्त्स्वाहां ॥२०॥ देवांगातुविदᳫं ॥ देवांगातुविदोगा
तुंवित्त्वागातुमिंत ॥ मनंसस्प्पतऽइमन्देंवयज्ञᳫंस्वाहावातेधाᳫं ॥ ६५ ॥
॥ २१ ॥ यज्ञंयज्ञम् ॥ यज्ञंयज्ञङ्गच्छयज्ञपंतिङ्गच्छस्वाँय्योनि

ङ्गच्छुस्वाहा ॥ एषतेयुज्ञोयज्ञपतेसुहसूक्तवाकुꣳसर्व्ववीरस्तञ्जुषस्वुस्वाहा ॥ २२ ॥ [ ८-६ ] माहिर्भूर्म्मापृदाकुः ॥ उरुꣳहिराजाुव्वरुणश्चकारसूर्य्यायुपन्थामन्वेतुवाऽउ ॥ अपदेपादुाप्प्रतिधातवेकरुतापवुक्ताहृदयाुविधश्चित् ॥ नमोुव्वरुणायाुभिष्ठितोुव्वरुणस्युपाशः ॥ २३ ॥ अुग्नेरनीकम् ॥ अुग्नेरनीकमुपऽआविवेशुापान्नपात्प्रतिुरक्षन्नसुुर्य्यम् ॥ दमेदमेस

१ हृदयाविधश्चित् । अत्र अश्वरश्मिमतिसुमतिश्वसुतचारयद्धणिसेदिमेन्द्रियधारयचित्रभङ्गुरवयुनाश्वस्यहृदय० (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वकारे परे हृदयाकारस्य दीर्घाकारो विधीयते । अतो हृदयशब्दाकारस्य दीर्घाकारः ।

मिधाꣳसक्ष्यग्नेष्प्रातितोजिह्वाघृतमुच्चरण्यत्स्वाहा ॥ २४ ॥ समु
द्रेते ॥ समुद्रेतेहृदयमप्स्वन्तःसन्त्वाविशन्त्वोषधीरुतापः ॥
यज्ञस्यत्वायज्ञपतेसूक्तोक्तौनमोवाकेविधेमयत्स्वाहा ॥ २५ ॥
देवीरापः ॥ देवीरापऽएषवोगर्भस्तꣳसुप्प्रीतꣳसुभृतम्बिभृत ॥
देवसोमैषतेलोकस्तस्म्मिञ्छञ्चवक्ष्वपरिचवक्ष्व ॥ २६ ॥ अव
भृथनिचुम्पुण । निचेरुरसिनिचुम्पुणः ॥ अवदेवैर्देवकृतमे ॥ ६६ ॥
नोऽयासिषमवमर्त्यैर्मर्त्यकृतम्पुरुराव्णोदेवरिषस्पाहिदेवा

नाꣳसुमिदंसि ॥ २७ ॥ [५-७] एजंतुदशमास्यꣳ ॥ एजं
तुदशमास्योगर्भोजरायुणासह ॥ यथायंव्वायुरेजंतियथासमु
द्रऽएजंति ॥ एवायन्दशमास्योऽअस्स्रंज्जरायुणासह ॥ २८ ॥
यस्यैते । यज्ञियोगर्भोयस्यैयोनिर्हिरण्ययी ॥ अङ्गान्यह्रुं
तायस्यतम्मात्रासमंजीगमꣳस्वाहा ॥ २९ ॥ पुरुदस्म्मोव्वि
षुरूपꣳ ॥ पुरुदुस्म्मोव्विषुरूपऽइन्दुरन्तम्महिमानंमानञ्जुधी
सं. १२ रः ॥ एकंपदीन्द्विपदीन्त्रिपदीञ्चतुष्पदीमष्टापदीम्भुवनानु

स्प्रथन्ताᳪंस्वाहा ॥ ३० ॥ मरुतोयस्यं ॥ मरुतोयस्यहिक्षये
पा[1]थादिवोविमहसः ॥ ससुगोपातमोजनः ॥ ३१ ॥ मही
द्यौः । पृथिवीचंनऽइमँय्यज्ञम्मिमिक्षताम् ॥ पितृतान्नोभरीं
मभिः ॥ ३२ ॥ [५-८] आ[2]तिष्ठ । वृत्रहन्नथँय्युक्तातेब्र
ह्मणाहरीं ॥ अर्वाचीनᳪंसुतेमनोग्ग्रावाकृणोतुवग्नुना ॥
उपयामगृहीतोसीन्द्रायत्त्वाषोडशिनऽएषतेयोनिरिन्द्रायत्त्वा ॥६७॥

१ अत्र पिबा सोमम् (शु. य. प्रा. अ. १३० सू.) इत्यनेन पाथ इत्यस्य ह्रस्वाकारस्य दीर्घः । २ आतिष्ठ वृत्रहन् । अत्र तिष्ठाद्युदात्तम् । (शु. य. प्रा. ३ अ. १०४ सू.) तिष्ठेत्येतत्पदं दीर्घमापद्यते यद्याद्युदात्तं भवति । इत्यनेन विधीयमानो दीर्घाकार आतिष्ठपदस्य आद्युदात्तत्वाभावेन न दीर्घः ।

षोडुशिनै ॥ ३३ ॥ [१-९] युंक्ष्वाहि । केुशिनाहरीुवृषंणा
कुक्ष्युप्प्रा ॥ अथानऽइन्द्रसोमपागिुरामुपंश्रुतिञ्चर ॥ उुप
यामगृंहीतुोसीन्द्रांयत्त्वाषोडुशिनंऽएुषतेुयोनिुरिन्द्रांयत्त्वाषो
डुशिनै ॥ ३४ ॥ [१-१०] इन्द्रुमित् ॥ इन्द्रुमिद्धरींवहुतोप्प्रंति
धृष्टशवसम् ॥ ऋषींणाञ्चस्तुुतीरुपंयुज्ञञ्चमानुंषाणाम् ॥ उुप
यामगृंहीतुोसीन्द्रांयत्त्वाषोडुशिनंऽएुषतेुयोनिुरिन्द्रांयत्त्वाषो
डुशिनै ॥ ३५ ॥ [१-११] यस्म्मान्न । जाुतश्परोऽअुन्न्योऽअ

१ अत्र पिबा सोमम् (शु. य. प्रा. ३ अ. १३० सू.) इत्यनेन अकारस्य दीर्घे युक्ष्वाहि इति ।

स्त्तयऽआविवेशभुवनानिविश्वा ॥ प्रजापतिःप्प्रजयासꣳ
रराणस्त्रीणिज्ज्योतीꣳषिसचतेसषोडशी ॥ ३६ ॥ इन्द्रश्च ।
सम्म्राड्वरुणश्चराजातौतेभक्षञ्चक्क्रतुरग्ग्रंऽएतम् ॥ तयोरहमनुभ
क्षम्भक्षयामिव्वाग्ग्देवीजुषाणासोमस्यतृप्प्यतुसहप्प्राणेनस्वा
हा ॥ ३७ ॥ [२-१२] अग्ग्नेपवस्व ॥ अग्ग्नेपवस्वस्वपाऽअस्म्मे
व्वर्च्चःसुवीर्य्यम् ॥ दधद्रयिम्मयिपोषम् ॥ उपयामगृहीतोस्य
ग्ग्नयेत्त्वाव्वर्च्चसऽएषतेयोनिरग्ग्नयेत्त्वाव्वर्च्चसे ॥ अग्ग्नेव्वर्च्चस्विन्व

र्च्चँस्वाँस्त्त्वन्देवेष्ष्वसिव्वर्च्चँस्वानुहम्मन्नुष्ष्येषुभूयासम् ॥ ३८ ॥
[ १-१३ ] उत्तिष्ठन्नोजसा ॥ उत्तिष्ठन्नोजसासहपीत्त्वीशिप्प्रेऽ
अवेपयः ॥ सोमंमिन्द्रचमूसुतम् ॥ उपयामगृहीतोसीन्द्राय
त्त्वौजसऽएषतेयोनिरिन्द्रायत्त्वौजसे ॥ इन्द्रौजिष्ठौजिष्ठस्त्त्व
न्देवेष्ष्वस्योजिष्ठोहम्मन्नुष्ष्येषुभूयासम् ॥ ३९ ॥ [ १-१४ ]
अदृश्श्रमस्य । केतवोव्विरश्म्मयोजनाँ२ ॥ ऽअनु ॥ भ्राजन्तोऽ
अग्नयोयथा ॥ उपयामगृहीतोसिसूर्य्यायत्त्वाभ्राजायैषते

 

योनि॒ꣳसूर्य्या॑यत्त्वा॒भ्राजा॑य ॥ सूर्य॑भ्राजिष्ठ॒भ्राजि॑ष्ठ॒स्त्व

॥ ६९ ॥ न्दे॒वेष्ष्वसि॒भ्राजि॑ष्ठो॒हम्म॑नु॒ष्ष्ये॑षुभूयासम् ॥४०॥ [१-१५] ॥ ८

उदु॒त्त्यम् ॥ उदु॒त्त्यञ्जा॒तवे॑दसन्दे॒वंव्वहन्तिके॒तवः॑ ॥ दृ॒शेवि

श्वा॑य॒सूर्य॑म् ॥ उ॒प॒या॒मगृ॑हीतोसि॒सूर्य्या॑यत्त्वा॒भ्राजा॑यै॒षते॒

योनि॒ꣳसूर्य्या॑यत्त्वा॒भ्राजा॑य ॥ ४१ ॥ [ १-१६ ] आजिग्घ्र ॥

आजि॑ग्घ्रक॒लशं॑म्म॒ह्यात्त्वा॑व्विश॒न्त्विन्द॑वः ॥ पुन॑रू॒र्ज्जानिव॑र्त्त ॥ ६९

स्व॒सानः॑स॒हस्रं॑न्धु॒क्ष्वो॒रुधा॑रा॒पय॑स्वती॒पुन॒र्म्माविश॑ताद्र॒यिः

॥ ४२ ॥ इडेरन्तें ॥ इडेरन्तेहव्येकाम्म्येचन्द्रेज्ज्योतेदितिसर
स्वतिमहिव्विश्श्रुति ॥ एतातेऽअग्घ्येनामानिदेवेब्भ्योमासुकृत
म्ब्रूतात् ॥ ४३ ॥ [ २-१७ ] व्विनः ॥ व्विनऽइन्द्रम्मृधोजहि
नीचायच्छपृतन्यतः ॥ योऽअस्म्माँ२ ॥ ऽअभिदासत्त्यध
रङ्गमयातमः ॥ उपयामगृहीतोसीन्द्रायत्त्वाव्विमृधऽएषते
योनिरिन्द्रायत्त्वाव्विमृधे ॥ ४४ ॥ [ १-१८ ] व्वाचस्पतिं ।

---

१ अस्य नामानि । अत्र नामानिपदस्थस्य निशब्दो बहुलम् (शु. य. प्रा. ३ अ. १८ सू.) इति सूत्रेण पदान्तीयस्य निशब्दस्य लोपे प्राप्तेऽपि सूत्रे बहुलम् ग्रहणात्क्वचिन्न भवति । तेन नात्र लोपः । २ अत्र पिबा सोमम् (शु. य. प्रा. ३ अ. १३० सू.) इत्यनेन दीर्घाकारे जाते गमयातमः ।

शु. य. संहि. विश्वकर्म्माणमूतयेमनोजुवंवाजेऽअद्याहुवेम ॥ सनोविश्वा पू. अ.
॥७०॥ निहवनानिजोषाद्विश्वशम्भूरवसेसाधुकर्म्मा ॥ उपयामगृही ॥८
तोसीन्द्रायत्वाविश्वकर्म्मणऽएषतेयोनिरिन्द्रायत्वाविश्वक
र्म्मणे ॥ ४५ ॥ [१-१९] विश्वकर्म्मन्हविषा ॥ विश्वकर्म्म
न्हविषावर्द्धनेनत्रातारमिन्द्रमकृणोरवध्यम् ॥ तस्म्मैविशः
समनमन्तपूर्व्वीरयमुग्ग्रोविहव्योयथासत् ॥ उपयामगृहीतो ॥७०

१ अद्य हुवेम। अत्र अद्य तं हकारचकारभवतवृणीमहेदेवेषु (शु. य. प्रा. ३ अ. ११५ सू.) इत्यनेन अद्येत्येतत्पदं ह्रस्वहकारतकारचकारभवत-वृणीमहेदेवेत्येषु परेषु दीर्घमापद्यते। इति हकारे परे अद्यशब्दाकारो दीर्घो जातः। तेन अद्याहुवेम इति।

सीन्द्रायत्त्वाव्विश्श्वकर्म्मणऽएषतेयोनिरिन्द्रायत्त्वाव्विश्श्वकं
र्म्मणे ॥ ४६ ॥ [ १-२० ] उपयामगृहीतोसि ॥ उपयाम
गृहीतोस्यग्नयेत्त्वागायत्रच्छन्दसङ्गृह्णामीन्द्रायत्त्वात्रिष्टुप्प्छ
न्दसङ्गृह्णामिव्विश्श्वेब्भ्यस्त्वादेवेब्भ्योजगच्छन्दसङ्गृह्णाम्म्यनु
ष्टुप्तेभिगरः ॥४७॥ व्व्रेशीनान्त्वा ॥ व्व्रेशीनान्त्वापत्क्मन्नाधू
नोमिकुकूननानान्त्वापत्क्मन्नाधूनोमिभन्दनानान्त्वापत्क्म
न्नाधूनोमिमदिन्तमानान्त्वापत्क्मन्नाधूनोमिमधुन्तमाना

न्त्वापत्न्मुन्नाधूंनोमिशुक्रन्त्वांशुक्रऽआधूंनोम्म्यह्नोंरूपेसूर्र्य्यं
स्यरश्मिमषुं ॥ ४८ ॥ ककुभᳬरूपं । वृषभस्यंरोचतेबृह
च्छुक्रःशुक्रस्यंपुरोगाःसोमᳬसोमंस्यपुरोगाः ॥ यत्तेंसोमादां
भ्यन्नामजागृंवितस्म्मैंत्वागृह्णामितस्म्मैंतेसोमसोमांयस्वा
हां ॥४९॥ उशिक्त्वम् ॥ उशिक्त्वन्देंवसोमाग्नेःप्प्रियम्पाथो
पींहिवशीत्त्वन्देंवसोमेन्द्रंस्यप्प्रियम्पाथोपींह्यस्म्मत्त्सखात्त्व
न्देंवसोमव्विश्वेंषान्देवानांम्प्रियम्पाथोपींहि ॥५०॥[४-२१]

इहरतिः ॥ इहरतिरिहरमद्ध्वमिहधृतिरिहस्वधृतिस्वाहा ॥
उपसृजन्धरुणम्मात्रेधरुणोमातरन्धयन् ॥ रायस्प्पोषमस्म्मा
सुदीधरत्स्वाहा ॥ ५१ ॥ सत्रस्यऽऋद्धिः ॥ सत्रस्यऽऋद्धिर
स्यगन्म्मज्योतिरमृताऽअभूम ॥ दिवम्पृथिव्याऽअद्ध्यारुहामा
विदामदेवान्त्स्वर्ज्ज्योतिः ॥ ५२ ॥ सुवन्तम् ॥ सुवन्तमि
न्द्रापर्व्वतापुरोयुधायोनःपृतन्यादपतन्तमिद्धतंव्वज्ज्रेणतन्त
मिद्धतम् ॥ दूरेचत्तायच्छन्तसद्गहनंय्यदिनक्षत् ॥ अस्म्मा

कुद्रात्रॅंन्परिंशूराद्विश्वतोंदुम्मार्दर्षीष्टद्विश्वतंः ॥ भूर्भुवःस्वः
सुप्प्रजाःप्प्रजाभिंःस्यामसुवीरांव्वीरैःसुपोषाःपोषैंः ॥ ५३ ॥
[ ३-२२ ] परमेष्ठ्यभिधींतः । प्प्रजापतिर्व्वाचिव्याहृतायाम
न्धोऽअच्छेतःसवितासन्न्यांव्विश्वकंर्म्मादीक्षायांम्पूषासोंमक्र
यंण्ण्यामिन्द्रंश्च ॥ ५४ ॥ इन्द्रंश्च । मुरुतंश्चक्क्रयायोपोत्त्थितो
सुरःपुण्ण्यमानोंमित्त्रःक्क्रीतोव्विष्ण्णुंःशिपिविष्टऽऊरावासंन्नो ॥ ७२ ॥

१ परमेष्ठ्यभिधीतः । अत्र परमेस्थ्यभिधीतः इत्यत्र भाविभ्यः सः षं समानपदे ( शु. य. प्रा. ३ अ. ५६ सू. ) इत्यनेन सकारस्य षत्वे षात्तथौ-मूर्धन्यम् ( शु. य. प्रा. ३ अ. ८१ सू. ) इत्यनेन षकारात्परौ तथौ मूर्धन्यत्वमापद्येते । तकारस्य टकारो थकारस्य ठकारो भवतीति ज्ञेयम् । एवं थकारस्य ठकारे कृते ऊष्मान्ताभ्यश्च स्पर्शः ( शु. य. प्रा. ३ अ. १०२ सू. ) इत्यनेन ठकारस्य द्वित्वम् ।

व्विष्णुर्न्नरन्धिषः प्प्रोह्यमाणः सोमः ॥ ५५ ॥ प्प्रोह्यमाणः
सोमः ॥ प्प्रोह्यमाणः सोमऽआगतो व्वरुणऽआसन्द्यामासन्नो
ग्निराग्नीध्रऽइन्द्रो हविर्द्धानेथर्व्वोपावह्रियमाणो व्विश्वेदेवाः
॥ ५६ ॥ व्विश्वेदेवाः ॥ व्विश्वेदेवाऽअंशुषुन्न्युप्प्तो व्विष्णुरा
प्प्रीतपाऽआप्प्या[1]य्यमानो यमः सूयमानो व्विष्णुः सम्भ्रियमा
णो व्वायुः पूयमानः शुक्रः पूतः शुक्रः क्षीरश्रीर्म्मन्थी सक्तुश्रीर्व्वि

[1] आप्प्याय्यमानः । अत्र आप्यायमानो यमो० (शु. य. प्रा. ४ अ. १५१ सू.) इत्यनेन द्विः यकारा संयोगा भवन्ति तेन द्वियकारे कृते पुनस्तृतीये क्रमजे यकारे प्राप्ते तस्य निषेधः ।

॥७२॥ श्वेँदेवाः ॥ ५७ ॥ विश्वेँदेवाः ॥ विश्वेँदेवाश्चमसेषून्नीतोसुर्होमायोद्यंतोरुद्रोहूयमानोव्वातोभ्याववृत्तोनृचक्षाऽःप्प्रतिख्यातोभक्षोभक्ष्यमाणःपितरोनाराशंसाःसन्नःसिन्धुः ॥ ५८ ॥ ॥८॥

सन्नःसिन्धुः ॥ सन्नःसिन्धुरवभृथायोद्यतःसमुद्रोभ्यवह्रियमाणःसलिलःप्प्रप्लुतोययोरोजसास्कभितारजाᳬसिव्वीर्येभिर्व्वीरतमाशविष्ठा ॥ यापत्यैतेऽअप्प्रतीतासहोभिर्व्विष्णूऽ ॥७२॥

अगन्वरुणापूर्व्वहूतौ ॥ ५९ ॥ देवान्दिवम् ॥ देवान्दिवम

गन्न्युज्ञस्त्ततौमाद्द्रविंणमष्ट्टुमनुष्ष्यानुन्तारिंक्षमगन्न्युज्ञस्त्ततौ
माद्द्रविंणमष्ट्टुपितॄन्न्पृथिवीमंगन्न्युज्ञस्त्ततौमाद्द्रविंणमष्ट्टुयङ्कञ्च
लोकमगंन्न्युज्ञस्त्ततौमेभुद्द्रमंभूत् ॥ ६० ॥ चतुस्त्रिꣳशुत्त
न्तंवꣳ ॥ चतुस्त्रिꣳशुत्तन्तवोयेव्वितत्त्रिरेयऽइमँय्युज्ञꣳस्त्व
धयाददंन्ते ॥ तेषांञ्छिन्नꣳसम्म्वेतद्दंधामिस्वाहांघुर्म्मोऽ
अप्प्यैतुदेवान् ॥ ६१ ॥ युज्ञस्युदोहंः ॥ युज्ञस्युदोहोव्वित
तꣳपुरुत्त्रासोऽअष्टुधादिवमुन्न्वातंतान ॥ सयंज्ञधुक्क्ष्वमहिंमे

प्रजायांᳫं रायस्पोषंव्विश्वमायुरशीयस्वाहा ॥ ६२ ॥ आप
वस्व ॥ आपंवस्वहिरंण्यवदश्वंवत्सोमव्वीरवंत् ॥ व्वाजङ्गोम
न्तमाभंरस्वाहा ॥ ६३ ॥ [ १०-२३ ] ॥ इतिश्रीवाजसनेय
संहितायामष्टमोऽध्यायः ॥ ८ ॥ श्रीवेदपुरुषाय नमः ॥ अनु
वाकसूत्रम् ॥ देवसवितश्चतस्र, इंद्रस्यवज्रः पंच, देवस्याहं
दश, पयेस्वाहातिस्रो, वाजस्येममष्टा, वग्निरेकाक्षरेणचतुष्कौ,



१ हिरण्यवदश्ववत् । अत्र अश्वशब्दस्य वतुपरे अश्वरश्मि० (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन अश्वशब्दाकारस्य दीर्घाकारे प्राप्ते नाश्वदहि-रण्यात् (शु. य. प्रा. ३ अ. ९९ सू.) इत्यनेन हिरण्यशब्दात्परस्याश्वशब्दाकारो न दीर्घ इति निषेधान्नात्राश्वशब्दाकारो दीर्घः ।

षतेचतुष्कौ, सवितात्वाद्वे, अष्टौचत्वारिꣳशत् [ अ. ९ मं. ४० अनु. ८ ] हरिः ॐ ॥ देवंसवितः ॥ देवंसवितुःप्प्रसुवयुज्ञम्प्रसु वयुज्ञपतिम्भगाय ॥ दिुव्योगन्धर्व्वःकेतपूःकेतन्नःपुनातुव्वाच स्प्पतिर्व्वाजन्नःस्वदतुस्वाहा ॥ १ ॥ ध्रुवसदन्त्वा । नृषदम्मनः सदमुपयामगृहीतोसीन्द्रायत्त्वाजुष्टंगृह्णाम्म्येषतेयोनिरिन्द्रा यत्त्वाजुष्टतमम् ॥ अप्प्सुषदन्त्वाघृतसदंव्योमसदमुपयाम गृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्त्वाजुष्टंत

मम् ॥ [1]पृथिविसदन्त्वान्तरिक्षसदन्दिविसदन्देवसदन्नाकसद
मुपयामगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्राय
त्त्वाजुष्टतमम् ॥ २ ॥ अपाꣳरसम् ॥ [2]अपाꣳरसमुद्वयसꣳ
सूर्य्येसन्तꣳसमाहितम् ॥ अपाꣳरसस्ययोरसस्तंवोगृह्णाम्म्यु
त्तममुपयामगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रा

---

१ पृथिविसदन्त्वा । अत्र भाविभ्यः सः षं समानपदे (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन समानपदे षत्वप्राप्तौ पृथिविदिव्युपरिचर्षणिशकुनियासिभ्यः (शु. य. प्रा. ३ अ. ८३ सू.) इत्यनेन पृथिविपरस्य सस्य षत्वनिषेधः । एवं दिविसदन्देवसदम् इत्यादिषु बोध्यम् । २ अपाꣳरसम् अत्र । दीर्घादर्द्धमात्रा पूर्वाचाध्यर्द्धा (शु. य. प्रा. ४ अ. १४९ सू.) इत्यनेन दीर्घात्स्वरात्परोऽनुस्वारोऽर्धमात्राकालो भवति तेन अपामित्यस्याऽऽकारात्परस्य मकारस्यानुस्वारस्यार्द्धमात्राप्रदर्शको ह्रस्वो गुंकारोऽत्र ज्ञेयः । एवं अपाꣳरसस्य । रजाꣳसि, प्रजायाꣳरायस्पोषम् ।

यत्त्वाजुष्टंतमम् ॥ ३ ॥ ग्रहांऽऊर्ज्जाहुतयं ॥ ग्रहांऽऊर्ज्जाहुत
योव्यन्तोव्विप्प्रायमतिम् ॥ तेषांव्विशिंप्प्रियाणांव्वोहमिषमूर्ज्ज
समंग्ग्रभमुपयामगृहीतोसीन्द्रायत्त्वाजुष्टंङ्गृह्णाम्म्येषतेयोनि
रिन्द्रायत्त्वाजुष्टंतमम् ॥ सम्पृचौस्त्थसम्मांभद्रेणंपृङ्क्तंव्विपृचौ
स्त्थोव्विमांपाप्मनापृङ्क्तम् ॥ ४ ॥ [ ४-१ ] इन्द्रस्यव्वज्ज्रं ॥
इन्द्रस्यव्वज्ज्रोसिव्वाजसास्त्वयायंव्वाजसेत् ॥ व्वाजस्यनुप्प्र
सवेमातरम्महीमदितिन्नामव्वचसाकरामहे ॥ यस्यामिदंव्विश्व

म्भुवंनमाविवेशुतस्यांन्नोदेवःसंविताधर्म्मंसाविषत् ॥ ५ ॥
अप्स्वुन्तः॥ अप्स्वुन्तरमृतंमुप्सुभेषजमुपामुतप्प्रशंस्त्तिष्ष्व
श्वाभवंतव्वाजिनंः ॥ देवीरापोयोवंऽऊर्म्मिःप्प्रतूर्त्तिःकुकुन्न्मा
न्वाजुसास्त्तेनायंव्वाजꣳसेत् ॥ ६ ॥ व्वातोंवा ॥ व्वातोंवामनों
वागन्धर्व्वाःसप्तविंꣳशतिः ॥ तेऽअग्ग्रेश्श्वंमयुञ्जुँस्त्तेऽअंस्म्मि
ञ्जवमादंधुः ॥ ७ ॥ व्वातंरꣳहाभव । व्वाजिन्न्युज्ज्यमांनुऽइन्द्र ॥ ७६ ॥
स्येवदक्षिणःश्श्रियैधि ॥ युञ्जन्तुंत्त्वामुरुतोंविश्श्ववेदसुऽआतेत्त्व

ष्ट्टांपुत्त्सुजुवन्दंधातु ॥८॥ जुवोयः॥ जुवोयस्त्तैंव्वाजिन्निहिंतो
गुहायश्श्श्येनेपरींत्तोऽअचरंच्चुव्वातें ॥ तेनंनोव्वाजिन्बलंवान्ब
लेंनव्वाजुजिच्चभवुसमंनेचपारयिष्ण्णुः ॥ व्वाजिंनोव्वाजजितो
व्वाजꣳसरिष्ष्यन्तोबृहुस्प्पतेंर्भागमवंजिग्घ्रत ॥९॥ [५-२]
देवस्याहम् ॥ देवस्याहꣳसंवितुश्सवेसुत्त्यसंवसोबृहुस्प्पतेंरुत्त
मन्नाकꣳरुहेयम् ॥ देवस्याहꣳसंवितुश्सवेसत्यसंवसुऽइन्द्रंस्यो
त्तमन्नाकꣳरुहेयम् ॥ देवस्याहꣳसंवितुश्सवेसत्त्यप्प्रंसवसो

 

बृहस्पतेरुत्तमन्नाकंमरुहम् ॥ देवस्याहꣳसवितुः सवेसत्त्यप्प्र
॥७७॥ सवसऽइन्द्रस्योत्तमन्नाकंमरुहम् ॥ १० ॥ बृहस्पतेर्वाजम् ॥ ॥९॥
बृहस्पतेर्वाजञ्जयबृहस्पतयेव्वाचंव्वदतबृहस्पतिंव्वाजञ्जाप
यत ॥ इन्द्रव्वाजञ्जयेन्द्रायव्वाचंव्वदतेन्द्रंव्वाजञ्जापयत ॥११॥
एषावः ॥ एषावꣳसासत्त्यासंव्वागंभूद्ययाबृहस्पतिंव्वाजम
जीजपताजीजपतबृहस्पतिंव्वाजंव्वनस्पतयोव्विमुञ्चध्वम् ॥ ॥७७॥
एषावꣳसासत्त्यासंव्वागंभूद्ययेन्द्रंव्वाजमजीजपताजीजपतेन्द्रं

व्वाजंव्वनस्प्पतयोव्विमुंञ्चयद्ध्वम् ॥ १२॥ देवस्याहम् ॥ देवस्याहॅ
सवितुःसवेसत्त्यप्प्रसवसोबृहस्प्पतेर्व्वाजजितोव्वाजञ्जेषम् ॥
व्वाजिनोव्वाजजितोद्ध्वनस्कब्भ्नुवन्तोयोजनामिमानाॅकाष्ठा
ङ्गच्छत ॥ १३ ॥ एषस्यः ॥ [1]एषस्यव्वाजीक्षिपणिन्तुरण्ण्य
तिग्ग्रीवायाम्बद्धोऽअपिकक्षऽआसनि ॥ क्रतुन्दधिक्क्राऽअ
नुसॅसनिष्ष्यदत्त्पथामङ्काॅस्यन्वापनीफणत्त्स्वाहा ॥ १४ ॥

---

१ एषः स्यः व्वाजी । अत्र स्य एव च ( शु. य. प्रा. ३ अ. १७ सू. ) इति सूत्रेण स्पपरे व्यञ्जने एष इत्यस्य विसर्गस्य लोपः । तथैव स्य इत्यस्य वाजीघटिते वकारे व्यञ्जने परे विसर्जनीयस्य लोपः । तेन एषस्यवाजी । अत्र लोपागमविकारप्रकृतिभावानां चतुर्णां सन्धीनां मध्येऽयं लोपनामा सन्धिर्विज्ञेयः ।

उतस्म्मं ॥ उतस्म्मास्युद्द्रवंतस्त्तुरण्ण्यतः पुर्ण्णन्नवेरनुंवातिप्प्र
गुर्द्धिनंः ॥ श्येनस्स्येवुद्ध्रजंतोऽअङ्कुसम्परिंदधिक्क्राव्ण्णंः
सहोर्ज्जातरिंत्त्रतःस्वाहां ॥ १५ ॥ शन्नंः ॥ शन्नोंभवन्तुव्वा
जिनोहवेंषुदेवतांतामितद्द्रवःस्वर्क्काः ॥ जम्भयन्तोहिंव्वृकुं
रक्षांꣳसिसनेंम्म्युस्म्मद्युंयवुन्नमीवाः ॥ १६ ॥ तेनंः ॥ तेनोऽ
अर्व्वन्तोहवनश्श्रुतोहवंव्विश्श्वेंशृण्ण्वन्तुव्वाजिनोंमितद्द्रवः ॥ सह ॥७८॥
स्त्रसामेधसांतासनिष्ष्यवोंमहोयेधनंःसमिथेषुंजभ्भ्रिरे ॥ १७ ॥

व्वाजेवाजेवत । व्वाजिनोनोधनेषुव्विप्प्राऽअमृताऽऋतज्ञाः ॥
अस्यमद्ध्वः पिबतमादयद्ध्वन्तृप्तायातपथिभिर्द्देवयानैः ॥ १८ ॥
आमा ॥ आमाव्वाजस्यप्प्रसवोजगम्म्यादेमेद्यावापृथिवीव्विश्श्व
रूपे ॥ आमागन्ताम्पितरामातराचामासोमोऽअमृतत्त्वेनग
म्म्यात् ॥ व्वाजिनोव्वाजजितोव्वाजꣳससृवाꣳसोबृहस्प्पतेर्
र्भागमवजिग्घ्रतनिमृजानाः ॥ १९ ॥ [ १०-३ ] आप
येस्वाहा । स्वापयेस्वाहापिजायस्वाहाक्क्रतवेस्वाहाव्वसवेस्वाहा

हर्प्पतये स्वाहाह्ने मुग्ग्धाय स्वाहा मुग्ग्धाय वैनꣳशिनाय स्वाहा वि
नꣳशिनऽआन्त्यायनाय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य
पतये स्वाहाधिपतये स्वाहा ॥ २० ॥ आयुर्य्यज्ञेन। कल्प्प
ताम्प्राणो यज्ञेन कल्प्पताञ्चक्षुर्य्यज्ञेन कल्प्पताꣳश्रोत्रँय्यज्ञेन
कल्प्पताम्पृष्ठँय्यज्ञेन कल्प्पताँय्यज्ञो यज्ञेन कल्प्पताम् ॥ प्रजा
पतेꣳप्प्रजाऽअभूम स्वर्द्देवाऽअगन्मामृताऽअभूम ॥ २१ ॥



१ अहर्प्पतये। अत्र समानपदे च (शु. य. प्रा. ३ अ. ३० सू.) इत्यनेन सकारे प्राप्ते, अहःपतौ रेफम् (शु. य. प्रा. ३ अ. ३९ सू.) इत्यनेन पतिशब्दे परे अहरित्यस्य विसर्जनीयस्य रेफः। तत ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन पकारस्य द्वित्वम्।

अस्म्मेवं॑ ॥ अस्म्मेवौऽअस्त्त्वन्द्रियमस्म्मेनृम्म्णमुतक्क्रतुर
स्म्मेव्वर्च्चौꣳसिसन्तुवः ॥ नमोमात्रेपृथिव्यैनमोमात्रेपृथि
व्याऽइयन्तेराड्डयन्तासियमनोद्ध्रुवोसिधरुणः ॥ कृष्यैत्त्वा
क्षेमायत्त्वारय्यैत्त्वापोषायत्त्वा ॥ २२ ॥ [ ३-४ ] व्वाज
स्येमम् ॥ व्वाजस्येमम्प्रसवःसुषुवेग्ग्रेसोमꣳराजानमोषधीष्व
प्प्सु ॥ ताऽअस्म्मब्भ्युम्मधुमतीर्ब्भवन्तुव्वयꣳराष्ट्रेजागृयाम
पुरोहिताःस्वाहा ॥ २३ ॥ व्वाजस्येमाम् ॥ व्वाजस्येमाम्प्रसवःशि

श्श्रियेदिवमिमाचविश्श्वाभुवनानिसम्म्राट् ॥ अदित्त्सन्तन्दा
पयातिप्प्रजानन्त्सनोरयिᳫं सर्व्ववीरन्नियच्छतुस्वाहा ॥ २४ ॥
व्वाजस्स्यनु । प्प्रसवऽआबभूवेमाचविश्श्वाभुवनानिसर्व्वतः ॥
सनेमिराजापरियातिव्विद्वान्प्रजाम्पुष्टिंव्वर्द्धयमानोऽअस्म्मेस्वा
हा ॥ २५ ॥ सोमᳫंराजानम् । सोमᳫंराजानमवसेग्निम
न्वारभामहे ॥ आदित्त्यान्विष्ण्णुᳫंसूर्य्यम्ब्रह्माणञ्चबृहस्प
तिᳫंस्वाहा ॥ २६ ॥ अर्य्यमणम्बृहस्प्पतिम् ॥ अर्य्यमण

म्बृहुस्प्पातिमिन्द्रुन्दानायचोदय ॥ व्वाचंव्विष्णुङ्सरस्वतीᳬं
सवितारञ्चव्वाजिनᳬंस्वाहा ॥ २७ ॥ अग्ग्नेऽअच्छं ॥ अग्ग्नेऽ
अच्छावदेहनᳬंप्प्रतिनᳬंसुमनाभव ॥ प्रनोयच्छसहस्रजित्त्वᳬं
हिधनदाऽअसिस्वाहा ॥ २८ ॥ प्रनः ॥ प्रनोयच्छत्त्वर्य्यमा
प्प्रपूषाप्प्रबृहुस्प्पतिः ॥ प्रवाग्ग्देवीददातुनᳬंस्वाहा ॥२९॥ देव
स्यत्त्वा । सवितुश्प्प्रसवेऽश्विनोर्बाहुब्भ्याम्पूष्णोहस्त्ताब्भ्याम् ॥

---

१ प्रनो यच्छत्वर्यमा । अत्र ऋषरेभ्यो नकारो णकारᳬं समानपदे (शु. य. प्रा. ३ अ. ८४ सू.) इत्यनेन ऋकारषकाररेफेभ्य उत्तरो नकारो णकारमापद्यते समानपदे । अनेन समानपदे णत्वविधानादत्र प्र नो इति पदयोः समानपदत्वाभावान्न णत्वम् ।

॥८१॥ सरस्वत्यैव्वाचोयन्तुर्य्यन्त्रियेदधामिबृहस्पतेष्ट्वासाम्म्राज्ज्येना
भिषिञ्[१]चाम्म्यसौ ॥ ३० ॥ [ ८-५ ] अग्निरेकाक्षरेण। प्प्राणमुद् ॥९॥
जयत्तमुज्जेषमश्विनौद्व्यक्षरेणद्विपदोमनुष्प्यानुदजयतान्ता
नुज्जेषंव्विष्णुस्त्र्यक्षरेणत्रीँल्लोकानुदजयत्तानुज्जेषꣳसोमश्चतुर
क्षरेणचतुष्प्पदꣳपशूनुदजयत्तानुज्जेषम्पूषापञ्चाक्षरेण ॥ ३१ ॥
पूषापञ्चाक्षरेण ॥ पूषापञ्चाक्षरेणपञ्चदिशऽउदजयत्ताऽउज्जे ॥८१॥

१ अभिषिञ्चामि । अत्र अभेश्च (शु. य. प्रा. ३ अ. ६५ सू.) इत्यनेन अभेः परस्य सिञ्चामीतिपदघटितस्य सकारस्य षत्वे रूपम् ।

षड्सविताषडक्षरेणषड्तूनुदंजयत्तानुज्जैषम्मरुतः सप्ताक्षरे
णसप्तग्राम्म्यान्पशूनुदंजयँस्तानुज्जैषम्बृहस्पतिरष्टाक्षरेण
गायत्रीमुदंजयत्तामुज्जैषम्मित्रोनवाक्षरेण ॥ ३२ ॥ मित्रो
नवाक्षरेण । त्रिवृतꣳस्तोममुदंजयत्तमुज्जैषंव्वरुणोदशाक्षरेण
व्विराजमुदंजयत्तामुज्जैषमिन्द्रऽएकादशाक्षरेणत्रिष्टुभमुदंज
यत्तामुज्जैषंव्विश्वेदेवाद्वादशाक्षरेणजगतीमुदंजयँस्तामुज्जैषंव्व
संवस्त्रयोदशाक्षरेण ॥ ३३ ॥ व्वसंवस्त्रयोदशाक्षरेण । त्रयोद

शꣳस्तोममुदंजयँस्तमुज्जैषꣳरुद्राश्चतुर्द्दशाक्षरेणचतुर्द्दशꣳ
स्तोममुदंजयँस्तमुज्जैषमादित्याःपञ्चंदशाक्षरेणपञ्चदशꣳस्तो
ममुदंजयँस्तमुज्जैषमदितिंꣳषोडंशाक्षरेणषोडशꣳस्तोममुद
जयत्तमुज्जैषम्प्रजापंतिꣳसप्तदंशाक्षरेणसप्तदशꣳस्तोममुद
जयत्तमुज्जैषम् ॥ ३४ ॥ [४-६] एषतें । निर्ऋतेभागस्त
ञ्जुषस्वस्वाहाग्निनेत्रेभ्योदेवेभ्यः पुरꣳसद्भ्यꣳस्वाहायमनेत्रे ॥८२॥

---

१ अदितिंꣳषोडशा । अत्र प्रत्ययसवर्णम्मुदि शाकटायनः (शु. य. प्रा. ३ अ. ९ सू.) इति विसर्गस्य परसवर्णे प्राप्ते अविकारं शाकल्यः शषसेषु (शु. य.प्रा. ३ अ. १० सू.) इत्यनेन परसवर्णनिषेधाद्विसर्ग एव । लोपागमविकारप्रकृतिभावानां चतुर्णां सन्धीनां मध्ये प्रकृतिभावाख्योऽयं सन्धिः ।

भ्योदेवेभ्योदक्षिणासद्भ्यःस्वाहाविश्वदेवनेत्रेभ्योदेवेभ्यः
पश्चात्सद्भ्यःस्वाहामित्रावरुणनेत्रेभ्योवामरुन्नेत्रेभ्योवादेवे
भ्यऽउत्तरासद्भ्यःस्वाहासोमनेत्रेभ्योदेवेभ्यऽउपरिसद्भ्योदुव
स्वद्भ्यःस्वाहा॥३५॥येदेवाः॥येदेवाऽअग्निनेत्राःपुरःसदस्ते
भ्यःस्वाहायेदेवायमनेत्रादक्षिणासदस्तेभ्यःस्वाहायेदेवा
विश्वदेवनेत्राःपश्चात्सदस्तेभ्यःस्वाहायेदेवामित्रावरुणने
त्रावामरुन्नेत्रावोत्तरासदस्तेभ्यःस्वाहायेदेवाःसोमनेत्राऽ

शु. य. संहि. उपरिसदोदुर्वस्वन्तस्तेभ्यꣳस्वाहा ॥ ३६ ॥ अग्नेसहस्व ॥ पू. अ.

॥८२॥ अग्नेसहस्वपृतनाऽअभिमातीरपास्य ॥ दुष्टरस्तरन्नरातीर्वर्च्चो ॥ ९ ॥

धायज्ञवाहसि ॥ ३७ ॥ देवस्यत्त्वा । सवितुःप्प्रसवेश्विनो

र्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥ उपाꣳशोर्व्वीर्य्येणजुहोमि

हतꣳरक्षꣳस्वाहारक्षसान्त्वावधायावधिष्ममरक्षोवधिष्ममामु

मसौहतः ॥ ३८ ॥ [ ४-७ ] सवितात्त्वा । सवानाꣳसुवता ॥८३॥

---

१ उपरिसदः । अत्र भाविभ्यः सः षं समानपदे (शु. य. प्रा. ३ अ. ७६ सू.) इत्यनेन षत्वप्राप्तौ पृथिविदिव्युपरिचर्षणिशकुनियासिभ्यः (शु. य. प्रा. ३ अ. ८४ सू.) इत्यनेन उपरिशब्दात्परस्य सदः इत्यस्य सस्य प्रकृतिभावे जाते न षत्वम् ।

मग्निर्गृहपतीनाᳯं सोमोव्वनस्प्पतीनाम् ॥ बृहस्प्पतिर्व्वाचऽ
इन्द्रोज्ज्यैष्ठ्यायरुद्द्रःपशुब्भ्योमित्रःसत्त्योव्वरुणोधर्म्मपतीना
म् ॥ ३९ ॥ इमन्देवाः ॥ इमन्देवाऽअसपत्त्नᳬंसुवद्ध्वम्महते
क्षत्रायमहतेज्ज्यैष्ठ्यायमहतेजानराज्ज्यायेन्द्रस्येन्द्रियाय ॥
इमममुष्ष्यपुत्त्रममुष्ष्यैपुत्त्रमस्स्यैव्विशऽएषवोमीराजासोमो
स्म्माकम्ब्राह्मणानाᳯंराजा ॥ ४० ॥ [ २-८ ] ॥ इतिश्रीवाज
सनेयसंहितायांनवमोऽध्यायः ॥ ९ ॥ श्रीवेदपुरुषायनमः ॥

अनुवाकसूत्रम् ॥ अपोदेवाश्चतस्रः, सोमस्यत्विषिः पञ्च,
वेष्टादन्दशूकाः सप्त, सोमस्यत्वाचतस्र, ऽइन्द्रस्यवज्रः पञ्च,
स्योनासिचतस्रः, सवित्राम्प्रसवित्रैका, श्विभ्यांपच्यस्वचतस्रो,
ष्टौचतुस्त्रिꣳशत् [अ. १० मं. ३४ अनु. ८] हरिः ॐ ॥ अपोदेवाꣳ ॥
अपोदेवामधुमतीरगृभ्णन्नूर्ज्जस्वतीराजस्वश्चितानाꣳ ॥ याभि
र्म्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्त्यरातीꣳ ॥ १ ॥



१ अभ्यषिञ्चन् । अभि असिञ्चन् । इति द्वे पदे अत्र अभेश्च (शु. ३ अ. ६५ सू.) अभेरुपसर्गात्परस्य सिञ्चतेः सकारः षकारमापद्यते संहितायाम् । इति इत्यनेनासिञ्चन्पदघटिताकारस्य व्यवधानेन षत्वाप्राप्तौ अव्यवहितोऽपि (शु. य. प्रा. ३ अ. ६६ सू.) इत्यनेन व्यवधानेऽपि षकारे रूपम् ।

वृष्णऽऊर्म्मिरः ॥ वृष्णऽऊर्म्मिरसि राष्ट्रदा राष्ट्रम्मे देहि स्वाहा
वृष्णऽऊर्म्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहि वृषसेनोसि राष्ट्रदा
राष्ट्रम्मे देहि स्वाहा वृषसेनोसि राष्ट्रदा राष्ट्रममुष्मै देह्यर्त्थेतस्त्थ
॥ २ ॥ अर्त्थेतस्त्थ । राष्ट्रदा राष्ट्रम्मे दत्त स्वाहार्त्थेतस्त्थ राष्ट्र
दा राष्ट्रममुष्मै दत्तौजस्वतीस्त्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहौजस्व
तीस्त्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापः परिवाहिणीस्त्थ राष्ट्रदा राष्ट्र
म्मे दत्त स्वाहापः परिवाहिणीस्त्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापा

सं. १५

म्पतिँरसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहापाम्पतिँरसिराष्ट्रदाराष्ट्रममु
ष्म्मैदेह्यपाङ्गर्ब्भौँसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहापाङ्गर्ब्भौँसिराष्ट्र
दाराष्ट्रममुष्म्मैदेहिसूर्य्यँत्त्वचसस्स्थ ॥ ३ ॥ सूर्य्यँत्त्व
चसस्स्थ । राष्ट्रदाराष्ट्रम्मेदत्तस्वाहासूर्य्यँत्त्वचसस्स्थराष्ट्रदा
राष्ट्रममुष्म्मैदत्तसूर्य्यँवर्च्चसस्स्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहासूर्य्यँ
वर्च्चसस्स्थराष्ट्रदाराष्ट्रममुष्म्मैदत्तमान्दास्स्थराष्ट्रदाराष्ट्रम्मेदत्त
स्वाहामान्दास्स्थराष्ट्रदाराष्ट्रममुष्म्मैदत्तव्व्रजक्षितस्स्थराष्ट्रदा

राष्ट्रम्मैदत्तस्वाहाव्व्रजक्षितस्त्थराष्ट्रदाराष्ट्रममुष्म्मैदत्तव्वाशा
स्त्थराष्ट्रदाराष्ट्रम्मैदत्तस्वाहाव्वाशास्त्थराष्ट्रदाराष्ट्रममुष्म्मैदत्त
शविष्ठास्त्थराष्ट्रदाराष्ट्रम्मैदत्तस्वाहाशविष्ठास्त्थराष्ट्रदाराष्ट्रम
मुष्म्मैदत्तशक्क्वरीस्त्थराष्ट्रदाराष्ट्रम्मैदत्तस्वाहाशक्क्वरीस्त्थराष्ट्र
दाराष्ट्रममुष्म्मैदत्तजनभृतस्त्थराष्ट्रदाराष्ट्रम्मैदत्तस्वाहाजनभृ
तस्त्थराष्ट्रदाराष्ट्रममुष्म्मैदत्तविश्वभृतस्त्थराष्ट्रदाराष्ट्रम्मैदत्त
स्वाहाविश्वभृतस्त्थराष्ट्रदाराष्ट्रममुष्म्मैदत्तापः स्वराजस्त्थरा

ष्ट्रदाराष्ट्रममुष्मैदत्त ॥ मधुमतीर्म्मधुमतीभिः पृच्यन्ताम्महि
॥८६॥ क्षत्रङ्क्षत्रियायवन्वानाऽअनाधृष्टाः सीदतसहौजसोमहिक्षत्रङ्क्ष ॥ १० ॥
त्रियायदधतीः ॥ ४ ॥ [ ४-१ ] शतम् ॥ ४०० ॥ सोमस्यत्त्वि
षिः ॥ सोमस्यत्त्विषिरसितवेवमेत्त्विषिर्भूयात् ॥ अग्नयेस्वा
हासोमायस्वाहासवित्रेस्वाहासरस्वत्यैस्वाहापूष्णेस्वाहाबृह
स्पतयेस्वाहेन्द्रायस्वाहाघोषायस्वाहाश्लोकायस्वाहाꣳशाय ॥ ८६ ॥
स्वाहाभगायस्वाहार्य्यम्णेस्वाहा ॥ ५ ॥ पवित्रेस्त्थः ॥ पवि

त्रैस्त्थोव्वैष्णव्ण्यौसवितुर्व्वः प्प्रसवऽउत्त्पुनाम्म्यच्छिद्द्रेणपवि
त्त्रेणसूर्य्यस्यरश्मिभिः ॥ अनिभृष्टमसिव्वाचोबन्धुस्त्तपो
जाःसोमस्यदात्रमसिस्वाहाराजस्वः ॥ ६ ॥ सधमादोद्द्युम्निन्न
नीः ॥ सधमादोद्द्युम्निन्नीरापऽएताऽअनाधृष्टाऽअपस्स्योव्वसा
नाः ॥ पस्त्त्यासुचक्क्रेव्वरुणःसधस्त्थमपाᳬशिशुम्मातृतमा
स्वन्तः ॥ ७ ॥ क्षत्रस्योल्बम् ॥ क्षत्रस्योल्बमसिक्षत्त्रस्यजरा
य्य्वसिक्षत्त्रस्ययोनिरसिक्षत्त्रस्यनाभिरसीन्द्रस्यव्वार्त्रघ्नमसिमि

त्रस्यासिव्वरुणस्यासित्त्वयायंव्वृत्रंव्वधेत् ॥ दृबासिरुजासिक्षु
मासि ॥ पातैनम्प्राञ्चम्पातैनम्प्रत्यञ्चम्पातैनन्तिर्य्यञ्चन्दि
ग्ग्भ्यःपात ॥ ८ ॥ आविर्म्मर्य्याꣳ ॥ आविर्म्मर्य्याऽआ
वित्तोऽअग्निर्गृहपतिरावित्तऽइन्द्रोवृद्धश्श्रवाऽआवित्तौमित्रा
वरुणौधृतव्व्रतावावित्तꣳपूषाविश्श्ववेदाऽआवित्तेद्यावापृथिवीवि
श्श्वशम्भुवावावित्तादितिरुरुशर्म्मा ॥ ९ ॥ [ ५-२ ] अवेष्टा
दन्दशूकाꣳ ॥ अवेष्टादन्दशूकाꣳप्प्राचीमारोहगायत्रीत्त्वाव

॥८७॥

तुरथन्तरꣳसामंत्रिवृत्त्स्तोमौव्वसन्तऽऋतुर्ब्रह्मद्द्रविणन्दक्षिणा
मारोह ॥ १० ॥ दक्षिणामारोह । त्रिष्टुप्प्त्वांवतुबृहत्त्सामंपञ्चद
शस्त्तोमोग्ग्रीष्ममऽऋतुःक्षत्रन्द्रविणम्प्रतीचीमारोह ॥ ११ ॥
प्रतीचीमारोह । जगतीत्त्वावतुव्वैरूपꣳसामंसप्तदशस्त्तोमो
व्वर्षाऽऋतुर्व्विड्द्रविणमुदीचीमारोह ॥ १२ ॥ उदीचीमारोहा ।
नुष्टुप्प्त्वांवतुव्वैराजꣳसामैकविꣳशस्त्तोमः शरदृतुःफलन्द्रवि
णमूर्द्ध्वामारोह ॥ १३ ॥ ऊर्द्ध्वामारोह । पङ्क्तिस्त्वांवतुशाक्कर

शु. य. संहि.

पू. अ. ॥ १० ॥

॥८८॥ रैवतेसामंनीत्रिणवत्त्रयास्त्रिंशौस्त्तोमौहेमन्तशिशिरावृतूवर्च्चो
द्रविणम्प्रत्त्यंस्त्तन्नमुचेःशिरः ॥ १४ ॥ सोमस्यत्त्विषिः ॥
सोमस्यत्त्विषिरसितवेवमेत्त्विषिर्भूयात् ॥ मृत्त्योःपाह्यो
जोसिसहोस्यमृतमसि ॥ १५ ॥ हिरण्णयरूपाऽउषसः ॥
हिरण्णयरूपाऽउषसोविरोकऽउभाविन्द्राऽउदिथःसूर्य्यश्च ॥
आरोहतंवरुणमित्त्रगर्त्तन्ततश्चक्षाथामदितिन्दितिञ्चमित्त्रोसि ॥८८॥
वरुणोसि ॥ १६ ॥ [ ७-३ ] सोमस्यत्त्वा । द्युम्न्नेना

भिषिञ्चाम्म्यग्ग्नेर्भ्राजसासूर्य्यस्यवर्च्चसेन्द्रस्येन्द्रियेण ॥ क्षत्रा
णाङ्क्षत्रपतिरेद्ध्यतिदिद्यून्पाहि ॥ १७ ॥ इमन्देवाः ॥ इम
न्देवाऽअसपत्नꣳ सुवद्ध्वम्महतेक्षत्रायमहतेज्यैष्ठ्यायमहते
जानराज्ज्यायेन्द्रस्येन्द्रियाय ॥ इमममुष्ष्यपुत्रममुष्ष्यैपुत्र
मस्यैविशऽएषवोमीराजासोमोस्म्माकम्ब्राह्मणानाꣳराजा
॥ १८ ॥ प्रपर्व्वतस्य । वृषभस्यपृष्ठान्नावश्चरन्तिस्वसिचऽइया
नाः ॥ ताऽआववृत्रन्नधरागुदक्ताऽअहिम्बुध्न्यमनुरीयमा

॥८९॥ णाहं ॥ विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः ॥१०॥
क्रान्तमसि ॥ १९ ॥ प्रजापते न । त्वदेतान्यन्यो विश्वा रूपा
णि परिता बभूव ॥ यत्कामास्ते जुहुमस्तन्नो ऽअस्तु वयमु
ष्याम पिताऽसावस्य पिता बृयः स्याम पतयो रयीणाः स्वाहा ॥ रुद्र
यत्ते क्रिवि परन्नाम तस्मिन्हुतमस्यमेष्टमसि स्वाहा ॥ २० ॥
[४-४] इन्द्रस्य वज्रोऽसि ॥ इन्द्रस्य वज्रोऽसि मित्रावरुणयोस्त्वा ॥८९॥
प्रशास्त्रोः प्रशिषा युनज्मि ॥ अव्यथायै त्वा स्वधायै त्वाऽरिष्टोऽ

अर्ज्जुनोमरुताम्प्रसवेनंजयापाम्मनसासमिन्द्रियेण ॥ २१ ॥
मातें ॥ मातंऽइन्द्रतेव्वयन्तुराषाडयुक्तासोऽअब्रह्मताव्वि
दंसाम ॥ तिष्ठा[1]रथमधियंव्वज्रहस्त्तारश्म्मीन्देवयमसेस्व
श्वान् ॥२२॥ अग्नयेगृहपतये ॥ अग्नयेगृहपतयेस्वाहासोमाय
व्वनस्प्पतयेस्वाहामरुतामोजसेस्वाहेन्द्रस्येन्द्रियायस्वाहा ॥
पृथिविमातर्म्मामाहिᳬंसीर्म्मोऽअहन्त्वाम् ॥ २३ ॥ हᳬंसःशु
चिषत् ॥ हᳬंसःशुचिषद्वसुरन्तरिक्षसद्धोताव्वेदिषदतिथिर्द्दुरोण

१ तिष्ठारथेन । अत्र तिष्ठाद्युदात्तम् (शु. य. प्रा. ३ अ. १०५ सू.) इत्यनेन तिष्ठेत्येतत्पदे आद्युदात्ते तस्याकारस्य दीर्घो भवति। अतो दीर्घाकारः ।

सत् ॥ नृषद्वरसदृतसद्व्योमसदब्जा गोजाऽऋतजाऽअद्रिजाऽ
ऋतम्बृहत् ॥ २४ ॥ इयदसि ॥ इयदस्यायुरस्यायुर्म्मयिधेहि
युङ्ङसिव्वर्च्चोसिव्वर्च्चोमयिधेह्यूर्ग्गस्यूर्ज्जम्मयिधेहि ॥ इन्द्रस्यवां
व्वीर्य्यकृतोबाहूऽअभ्युपावहरामि ॥ २५ ॥ [५-५] स्योनासि ।
सुषदासिक्षत्रस्ययोनिरसि ॥ स्योनामासीदसुषदामासीदक्षत्र
स्ययोनिमासीद ॥ २६ ॥ निषसाद । धृतव्व्रतोव्वरुणःपस्त्यास्वा ॥
साम्म्राज्ज्यायसुक्क्रतुः ॥ २७ ॥ अभिभूरसि ॥ अभिभूरस्येता

१ निषसाद । अत्र नि ससाद इति पदम् ससाद च (शु. य. प्रा. ३ अ. ६० सू.) इत्यनेन नेः परस्य ससादशब्दस्य सकारस्य षकारे निषसादेति रूपम् ।

स्त्तेपञ्चदिशः कल्पन्ताम्ब्रह्मँस्त्वम्ब्रह्मासिसवितासिसत्त्य
प्प्रसवोव्वरुणोसिसत्त्यौजाऽइन्द्रोसिव्विशौजारुद्द्रोसिसुशेवः ॥
बहुकारश्श्रेयस्करभूयस्करेन्द्रस्यव्वज्रोसितेनमेरद्ध्य ॥ २८ ॥
अग्निः पृथुः ॥ अग्निः पृथुर्द्धर्म्मणस्पतिर्ज्जुषाणोऽअग्निः पृ
थुर्द्धर्म्मणस्पतिराज्ज्यस्यव्वेतुस्वाहास्वाहाकृताःसूर्य्यस्यरश्मिभि
र्व्वयतध्वꣳसजातानाम्मद्ध्यमेष्ठ्याय ॥ २९ ॥ [४-६] सवि
त्राप्रसवित्रा। सरस्वत्त्यावाचात्त्वष्ट्रारूपैःपूष्णापशुभिरिन्द्रे

१ श्रेयस्करभूयस्कर इत्यत्र समानपदे च (शु. य. प्रा. ३ अ. ३० सू.) इत्यनेन ककारपकारप्रत्ययोः यथायोगं समानपदे सकारः षकारश्च विधीयते।

शु. य. संहि. पू. अ.

॥ ९१ ॥ णास्म्मेबृहुस्प्पतिंनाब्रह्मंणाव्वरुंणेनौजंसाग्निनातेजंसासोमे ॥ १० ॥

नराज्ञाव्विष्णुंनादशम्म्यादेवतंयाप्प्रसूंतꣳप्प्रसंप्प्रामि ॥ ३० ॥

[१-७] अश्श्विब्भ्याम्पच्च्यस्व ॥ अश्श्विब्भ्याम्पच्च्यस्वसरंस्व

त्त्यैपच्च्यस्वेन्द्रांयसुत्राम्म्णेपच्च्यस्व ॥ व्वायुःपूतःपवित्त्रेणप्प्र

त्त्यङ्क्सोमोऽअतिंस्स्रुतꣳ ॥ इन्द्रंस्यसुज्ज्यꣳसखा ॥ ३१ ॥ कुवि

दुङ्ग । यवंमन्तोयवंञ्चिद्यथादान्त्यंनुपूर्व्वंव्वियूयं ॥ इहेहैषाङ्कृणु ॥ ९१ ॥

---

१ प्रत्यङ्क्सोमः । अत्र प्रत्यङ् सोम इति पदम् । ङ्नौ क्ताभ्यां सकारे ( शु. य. प्रा. ३ अ. १५ सू. ) ङकारनकारौ यथासंख्यं ककारतकाराभ्यां सकारे परे व्यवधीयेते । तेनात्र ङकारात्परस्य ककारे रूपम् । लोपागमविकारप्रकृतिभावानां चतुर्णां सन्धीनां मध्येऽयमागमाख्यः सन्धिः ।

हिभोजंनानियेबर्हिषोनमंऽउक्किंऽयजंन्ति ॥ उपयामगृंहीतो
स्यश्विभ्यांन्त्वासरंस्वत्त्यैत्त्वेन्द्रांयत्त्वासुत्रांम्म्णें ॥ ३२ ॥ सुवꣳ
सुरामंम् ॥ सुवꣳसुरामंमाश्विनानमुंचावासुरेसचां ॥ विपिपा
नाशुंभस्प्पतीऽइन्द्रङ्कर्म्मस्वावतम् ॥ ३३ ॥ पुत्रामिंवपितरौं ॥
पुत्रामिंवपितरावश्विनोभेन्द्रावथुःकाव्यैर्दꣳसनांभिः ॥ यत्त्सु
रामंव्यपिबःशचींभिःसरंस्वतीत्त्वामघवन्नभिष्णक् ॥ ३४ ॥
[४-८] इतिश्रीवाजसनेयसंहितायांदशमोऽध्यायः ॥ १० ॥

शु. य. संहि. श्रीवेदपुरुषायनमः। अनुवाकसूत्रम्। युञ्जानएकादश, प्रतूर्त्तं पू. अ.
॥९२॥ वाजिन्षोडश, देवस्यत्वादश, पोदेवीर्द्वादश, पोह्येकादश, ॥ ११ ॥
दितिश्चापञ्च, कूतिमग्निमष्टादश, सप्तत्र्यशीतिः॥ [अ. ११
मं. ८३ अनु० ७]॥ हरिः ॐ॥ युञ्जानः प्रथमम्॥ युञ्जानः
प्रथमम्मनस्तत्त्वायसविताधियः॥ अग्नेर्ज्योतिर्निचाय्य
पृथिव्याऽअध्याभरत्॥१॥ युक्तेनमनसा। वयन्देवस्यसवितुः ॥९२॥
सवे॥ स्वर्ग्यायशक्त्या॥२॥ युक्त्वायसविता। देवान्त्स्व

र्य्यतोधियादिवम् ॥ बृहज्ज्योतिः करिष्ष्यतः सविताप्प्रसुवाति
तान् ॥ ३ ॥ युञ्जतेमनः ॥ युञ्जतेमनऽउतयुञ्जतेधियोव्विप्प्रा
व्विप्प्रस्यबृहतोव्विपश्चितः ॥ व्विहोत्त्रादधेव्वयुनाविदेकऽइन्मही
देवस्यसवितुः परिष्टुतिः ॥ ४ ॥ युजेवाम् ॥ युजेवाम्ब्रह्मपूर्व्यं
न्नमोभिर्व्विश्श्लोकऽएतुपत्थ्येवसूरेः ॥ शृण्वन्तुव्विश्वेऽअमृत
स्यपुत्त्राऽआयेधामानिदिव्यानितस्थुः ॥ ५ ॥ यस्यप्प्रयाणम् ॥
यस्यप्प्रयाणमन्न्वन्न्यऽइद्ययुर्देवादेवस्यमहिमानमोजसा ॥

सःपार्थिवानिविमुमेसऽएतशोरजांᳪसिदेवःसवितामहित्व
ना ॥ ६ ॥ देवंसवितः ॥ देवंसावितःप्प्रसुवयज्ञम्प्रसुवयज्ञपंति
म्भगांय ॥ दिव्योगन्धर्व्वःकेतपूःकेतन्नःपुनातुव्वाचस्प्पतिर्व्वा
चंन्नःस्वदतु ॥ ७ ॥ इमन्नः ॥ इमन्नोदेवसवितर्य्यज्ञम्प्रणंय[1]
देवाव्यᳫंसखिविदंᳫसत्राजितंन्धनजितंᳪस्वर्जितम् ॥ ऋचा
स्तोमᳫंसमंर्द्धयगायत्रेणंरथन्तरम्बृहद्गांयत्रवंर्त्तनिस्वाहा ॥ ८ ॥ 

---

१ प्रणय। अत्र प्र नय इति पदम्। अत्र समानपदाभावेन ऋषरेभ्यः इत्यस्याप्राप्तौ प्रनेतिज्ञुदातिहिनोमीनाम् (शु. य. प्रा. ३ अ. ८९ सू.) इत्यनेन प्रपूर्वाणां नेति ज्ञुदाति हिनोमि इत्येषां नकारस्य णकारो विधीयते तेनात्र प्रणय इत्यत्र णत्वम्। सूत्रे हिनोमीतिविकरणनिर्देशाद्यत्र विकरणाभावस्तत्र न णत्वम्।

देवस्यत्त्वा । सवितुः प्प्रसवेऽश्विनोर्ब्बाहुभ्यांम्पूष्णोहस्ताभ्या
म् ॥ आददेगायत्रेणच्छन्दसाङ्गिरस्वत्पृथिव्याः सधस्त्थादग्नि
म्पुरीष्यमङ्गिरस्वदाभरत्रैष्टुभेनच्छन्दसाङ्गिरस्वत् ॥ ९ ॥
अभ्रिरसि ॥ अभ्रिरसिनार्य्यसित्त्वयाव्वयमग्निꣳशकेमखन
नितुꣳ सधस्त्थऽआ ॥ जागतेनच्छन्दसाङ्गिरस्वत् ॥ १० ॥
हस्तऽआधाय । सविताबिभ्रदभ्रिꣳ हिरण्ययीम् ॥ अग्ने

---

१ त्रैष्टुभेन । अत्र ऋषरेभ्यो नकारो णकारꣳ समानपदे (शु. य. प्रा. ३ अ. ८५ सू.) इत्यनेन समानपदे स्वरयवहकपैश्च (शु. य. प्रा. ३ अ. ८६ सू.) इत्यनेन व्यवधानेऽपि विहितस्य प्राप्तस्य णत्वस्य शिलिसिवर्गमध्यमव्यवहितोऽपि (शु. य. प्रा. ३ अ. ९६ सू.) इत्यनेन शकारलकारसकार (मध्यमवर्ग) चवर्गटवर्गतवर्गव्यवधानेषु ऋषरेभ्यः परस्य नकारस्य प्रकृतिभावादत्र णत्वं निषिध्यते ।

ज्योतिर्न्निचाय्यपृथिव्याऽअद्ध्याभंरदानुंष्टुभेनुच्छन्दंसाङ्गिर
स्वत् ॥ ११ ॥ [ ११-१ ] प्रतूर्त्तंव्वाजिन् ॥ प्रतूर्त्तंव्वाजिन्नाद्द्रंवुव्वरिं
ष्ठामनुंसंव्वतम् ॥ दिवितेजन्मंपरममन्तरिंक्षेतवुनाभिंःपृथि
व्यामधियोनिरित् ॥ १२ ॥ युञ्जाथाꣳरासंभम् ॥ युञ्जाथाꣳ
रासंभँय्युवमुस्मिन्न्यामेंवृषण्वसू ॥ अग्निम्भरंन्तमस्म्मयुम्
॥ १३ ॥ योगेंयोगेतुवस्त्तंरम् ॥ योगेंयोगेतुवस्त्तंरंव्वाजेंवाजे 
हवामहे ॥ सखांयुऽइन्द्रंमुतयें ॥ १४ ॥ प्रतूर्व्वन्नेहिं ॥ प्रतूर्व्व

नेह्यंवक्कामुन्नशंस्त्तीरुद्रस्यगाणंपत्त्यम्मयोभूरेहिं ॥ उर्व्वन्तरीक्षं
वीहिस्वस्त्तिगंव्यूतिरभंयानिकृण्ण्वन्पूष्ण्णासयुजांसह ॥१५॥
पृथिव्याःसधस्त्थांत् ॥ पृथिव्याःसधस्त्थांदग्निम्पुंरीष्यमङ्गि-
रस्वदाभंराग्निम्पुंरीष्यमङ्गिरस्वदच्छैमोग्निम्पुंरीष्यमङ्गिर-
स्वद्भंरिष्यामः ॥ १६ ॥ अन्वग्निः ॥ अन्वग्निरुषसामग्ग्रं
मक्ख्यदन्वहांनिप्प्रथमोजातवेंदाः ॥ अनुसूर्य्यस्यपुरुत्राचं
रश्म्मीननुद्यावांपृथिवीऽआततन्थ ॥१७॥ आगत्त्यंवाजी ॥

आगत्त्यंव्वाज्ज्यद्ध्वानꣳसर्व्वामृधोव्विधूनुते ॥ अग्निꣳसधस्त्थे
महतिचक्षुषानिचिकीषते ॥ १८ ॥ आक्क्रम्म्यंव्वाजिन् ॥ आक्क्र
म्म्यंव्वाजिन्पृथिवीमग्निमिच्छरुचात्त्वम् ॥ भूम्म्यांव्वृत्त्वाय
नोब्रूहिसतꣳखनेमतंव्वयम् ॥ १९ ॥ द्यौस्त्ते । पृष्ठम्पृथिवी
सधस्त्थमात्क्मान्तरिक्षꣳसमुद्द्रोयोनिः ॥ व्विख्ख्यायचक्षु
षात्त्वमभितिष्ठपृतन्यतः ॥ २० ॥ उत्क्क्राम । महतेसौभगाया ॥९५॥
स्म्मादास्त्थानांद्द्रविणोदाव्वाजिन् ॥ व्वयꣳस्यामसुमतौपृथि

ब्याऽअग्निर्ह्वनन्तऽउपस्त्थेऽअस्याः ॥ २१ ॥ उदक्रमीत् ॥ उदक्र
मीद्द्रविणोदाव्वाज्यर्व्वाकः सुलोकᳬं सुकृतम्पृथिव्याम् ॥ ततः
खनेमसुप्प्रतीकमग्निᳬं स्वोरुहाणाऽअधिनाकमुत्तमम् ॥ २२ ॥
आत्त्वा । जिघर्म्मिमनसाघृतेनप्प्रतिक्षियन्तम्भुवनानिव्विश्वा ॥
पृथुन्तिरश्चाव्वयसाबृहन्तंव्यचिष्ठमन्नैरभसन्दृशानम् ॥ २३ ॥
आविश्वतः । प्प्रत्त्यञ्चञ्जिघर्म्म्यरक्षसामनसातज्जुषेत ॥ मर्य्य
श्रीस्प्पृहयद्वर्णोऽअग्निर्न्नाभिमृशेतन्न्वाजर्भुराणः ॥ २४ ॥

परिवाजंपतिं॑ ॥ पैरिवाजंपतिं॑कविर॒ग्निर्ह॒व्यान्य॑क्रमीत् ॥
दध॒द्रत्ना॑नि दा॒शुषे॑ ॥ २५ ॥ परि॑त्वा । ग्ने पुरं॑व॒यंविप्र॑ꣳसह
स्यधीमहि ॥ धृ॒षद्व॑र्णन्दि॒वेदि॑वे ह॒न्तारं॑भ॒ङ्गु॒रावं॑ताम् ॥ २६ ॥
त्वमं॑ग्ने ॥ त्वमं॑ग्ने॒द्युभि॒स्त्वमा॑शुशु॒क्षणि॒स्त्वम॒द्भ्यस्त्वम
श्म॑नस्प्परि॑ ॥ त्वं॑वने॑भ्य॒स्त्वमोष॑धीभ्य॒स्त्वन्नृ॒णान्नृ॑पतेजा

---

१ परिवाजपतिः कविः । अत्र कविष्करत्कृधिषु ( शु. य. प्रा. ३ अ. ३२ सू. ) इत्यनेन कविपरे पतिशब्दस्य विसर्गस्य षकारे प्राप्ते वाजपतिवासऽएदिधिषुरन्तःपर्शव्येनान्तःपार्श्वमिति च ( शु. य. प्रा. ३ अ. ३८ सू. ) इत्यनेन सकारषकारयोर्निषेधाद्विसर्जनीय एव । २ भङ्गुरावताम् । अत्र अश्वरश्मिमतिसुमति ( शु. य. प्रा. ३ अ. ९८ सू. ) इत्यनेन वकारे परे भङ्गुरशब्दस्य ह्रस्वाकारस्य दीर्घाकारः । ३ नृणाम् । अत्र ऋषरेभ्यो नकारो णकारं समानपदे ( शु. य. प्रा. ३ अ. ८५ सू. ) इत्यनेन समानपदे ऋकारपरस्य नकारस्य णत्वम् ।

यसेशुचिं॑ ॥ २७ ॥ [१६-२] देवस्यंत्त्वा । सवितुः प्प्रंस
वेश्विनोर्बाहुब्भ्यांम्पूष्णोहस्त्ताब्भ्याम् ॥ पृथिव्याःसधस्त्थां
दग्निम्पुंरीष्ष्यमङ्गिरस्वत्त्खंनामि ॥ ज्योतिष्मन्तन्त्वाग्ग्ने
सुप्प्रतीकमर्जस्त्रेणभानुनादीद्यंतम् ॥ शिवम्प्रजाब्भ्योहिं॑
सन्तम्पृथिव्याःसधस्त्थांदग्निम्पुंरीष्ष्यमङ्गिरस्वत्त्खंनामः॑
॥ २८ ॥ अपाम्पृष्ठम् ॥ अपाम्पृष्ठमंसियोनिंरग्नेःसंमुद्रम
भितः॑पिन्वमानम् ॥ वर्द्धमानोमहाँ २॥ ऽआचपुष्करेदिवो

सं. १७

मात्रँयाव्वरिम्म्णाप्प्रथस्व ॥ २९ ॥ शर्म्मच ॥ शर्म्मचस्त्थो
व्वर्म्मचस्त्थोऽच्छिद्द्रेबहुलेऽउभे ॥ व्यचस्वतीसंव्वसाथाम्भृतम्
ग्निम्पुरीष्ष्यम् ॥ ३० ॥ संव्वसाथाम् ॥ संव्वसाथाᳫँस्वर्व्विदा
समीचीऽउरसात्त्मना ॥ अग्निमन्तर्ब्भरिष्ष्यन्तीज्ज्योति
ष्मन्तमजस्रमित् ॥ ३१ ॥ पुरीष्ष्योसि । व्विश्वभराऽअथ
र्व्वात्त्वाप्प्रथमोनिरमन्थदग्ने ॥ त्वामग्नेपुष्क्करादद्ध्यथर्व्वानिर
मन्थत ॥ मूर्द्ध्नोव्विश्श्वस्यव्वाघतः ॥ ३२ ॥ तमुत्त्वा । दद्ध्य

ङ्ऋषिं÷पुत्रऽईधेऽअथर्व्वणः ॥ वृत्रहणंम्पुरन्दुरम् ॥ ३३ ॥
तमुंत्त्वा । पात्थ्योव्वृषासमींधेदस्युहन्तंमम् ॥ धनञ्जयᳬंरणें
रणे ॥ ३४ ॥ सीदंहोतः ॥ सीदंहोतुःस्वऽउंलोकेचिंकित्त्वा
न्त्सादयांयुज्ञᳬंसुंकृतस्ययोनौं ॥ देवावीर्दैवान्हुविषांयजास्य
ग्नेबृहद्यजंमानेव्वयोंधाः ॥ ३५ ॥ निहोतां । होतृषदनेव्वि
दांनस्त्त्वेषोदींदिवाँ२॥ऽअंसदत्त्सुदक्षः÷ ॥ अदंᳬधव्व्रतप्प्रम
तिर्व्वसिंष्ठःसहस्त्रम्भुरःशुचिंजिह्वोऽअग्निः ॥ ३६ ॥ सᳬंसीं

१ सादय यज्ञम्। इति पदम्। अत्र अथोदारिथशोचपनय सादयज्ञं० (य. शु. प्रा. ३ अ. ११२ सू.) इत्यनेन यकारे परे दीर्घविधानात्। सादयायज्ञम्।

 

दस्व । मुहाँ २॥ऽअंसिशोचंस्वदेववीतंमः ॥ विधूममंग्नेऽअरुष
म्मियेद्ध्यसृजप्प्रंशस्त्तदर्शतम् ॥ ३७ ॥ [ १०-३ ] अपोदेवीः ॥
अपोदेवीरुपंसृजमधुंमतीरयुक्ष्मायंप्प्रजाब्भ्यंः ॥ तासांमा
स्त्थानादुज्जिहतामोषंधयःसुपिप्पलाः ॥ ३८ ॥ सन्तें । वायु
र्मातरिश्वांदधातूत्तानायाहृदयँव्यद्विकंस्त्तम् ॥ योदेवानाञ्चर
सिप्प्राणथेंनकस्म्मैदेववषंडस्त्तुतुब्भ्यंम् ॥ ३९ ॥ सुजांतोज्ज्यो ॥९८॥
तिषा । सहशर्म्मवरूथमासंदत्स्वः ॥ वासोंऽअग्नेविश्व

रूपृदृसंव्व्यंयस्वव्विभावसो ॥४०॥ उद्दुंतिष्ठ । स्वद्धुरा[1]वांनोदेव्व्या

धिया ॥ दृशेचभासाबृंहृतासुंशुक्कनिराग्नेयाहिसुशस्तिभिं॑

॥ ४१ ॥ ऊर्द्धऽऊषुणं॑ ॥ ऊर्द्धऽऊषुणं[2]ऽऊतयेतिष्ठा[3]देवो

नसंविता ॥ ऊर्द्धोंव्वाजंस्युसनितायदुञ्जिभिर्व्वाघद्धिर्व्विह्वयांमहे

॥ ४२ ॥ सजातः ॥ सजातोगर्भोऽअसिरोदंस्योरग्नेचारुर्व्वि

भृंतऽओषधीषु ॥ चित्रःशिशुःपरितमांᳫंस्यक्तूर्न्प्रमातृभ्योऽ

---

१ अवानोधिया। अत्र अवोपसर्गस्य ह्रस्वाकारस्य नोपरे धारययोजाव० (य. शु. प्रा. ३ अ. १०८ सू.) इत्यनेन दीर्घाकारः। २ ऊर्द्धऽऊषुणः ऊर्द्ध ऊ सुनः इत्यत्र ऊश्चापृक्तात् (शु. य. प्रा. ३ अ. ६२ सू.) इत्यनेन अपृक्तसंज्ञादूकारात्परः सकारः षत्वमापद्यते तेन सस्य षकारः। ३ तिष्ठादेवः। अत्र तिष्ठाद्युदात्तम् (शु. य प्रा. ३ अ. १०४ सू.) इत्यनेन यदि तिष्ठेत्येतत्पदं आद्युदात्तं भवेत्तदा दीर्घत्वं प्राप्नोति। अत्र तिष्ठेत्येतस्याद्युदात्तत्वाद्दीर्घः।

अधिकनिक्क्रदद्दह्नाः ॥ ४३ ॥ स्थिरोभव । वीड्वङ्गऽआशुर्भव
वाज्यर्वन् ॥ पृथुर्भवसुषदस्त्वमग्नेः पुरीष[1]वाहणः ॥ ४४ ॥
शिवोभव । प्रजाभ्योमानुषीभ्यस्त्वमङ्गिरः ॥ माद्यावा
पृथिवीऽअभिशोचीर्म्मान्तरिक्षम्मावनस्पतीन् ॥ ४५ ॥ प्रैतु ।
वाजीकनिक्क्रदन्नानदद्रासभः पत्वा ॥ भरन्नग्निम्पुरीष्यम्मा
पाद्यायुषः पुरा ॥ वृषाग्निंवृषणम्भरन्नपाङ्गर्भꣳसमुद्रियम् ॥

१ पुरीषवाहणः । अत्र ऋषरेभ्यो नकारो णकारं समानपदे ( शु. य. प्रा. ३ अ. ८५ सू. ) इत्यप्राप्तौ स्वरयवहकपैश्च ( शु. य. प्रा. ३ अ. ८५ सू. ) इत्यनेन ऋषरेभ्यो स्वरयवहकवर्गपवर्गव्यवधानेष्वपि णत्वविधानादत्र वाहनशब्दस्य नस्य णत्वम् ।

अग्नऽआयाहिव्वीतये ॥ ४६ ॥ ऋतꣳसत्त्यम् ॥ ऋतꣳस
त्त्यमृतꣳसत्त्यमग्निम्पुरीष्यमङ्गिरस्वद्भरामः ॥ ओषधयः
प्प्रतिमोदद्ध्वमग्निमेतꣳशिवमायन्तमब्भ्यत्र्त्रं युष्म्माः ॥ व्यस्य
न्विश्श्वाऽअनिराऽअमीवानिषीदन्नोऽअपदुर्म्मतिञ्जहि ॥४७॥
ओषधयः प्प्रति । गृब्भ्णीतपुष्प्पवतीः सुपिप्पलाः ॥ अयंव्वो
गब्भेऽऋत्त्वियः प्प्रत्क्नꣳसधस्त्थमासदत् ॥४८॥ व्विपाजसा ।
पृथुनाशोशुचानोबाधस्वद्विषोरक्षसोऽअमीवाः ॥ सुशर्म्मणो

शु. य. संहि. ॥१००॥

बृहतश्शर्म्मणिस्यामग्नेरहꣳसुहवस्यप्प्रणीतौ ॥४९॥ [१२-४] पू. अ.
आपोहि । ष्ठा[1]मयोभुवस्तानऽऊर्ज्जेदधातन ॥ महेरणायच ॥ ११ ॥
क्षसे ॥ ५० ॥ योवः । शिवतमोरसस्तस्यभाजयतेहनः ॥
उशतीरिवमातरः ॥ ५१ ॥ तस्म्माऽअरम् ॥ तस्म्माऽअरङ्ग
मामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ ५२ ॥
मित्रश्सꣳसृज्ज्य । पृथिवीम्भूमिञ्चज्ज्योतिषासह ॥ सुजातञ्जात ॥ १०० ॥

---

१ हिष्ठामयः । अत्र हि स्थामयो भुवः । अत्र हेर्मिथोदयः (शु. य. प्रा. ३ अ. ५८ सू.) इत्यनेन हिशब्दात्परः मकारोदयो थकारोदयो वा सकारस्य षकारो विधीयते । तथा सति ततः ष्टुत्वे थकारस्य ठकारे ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन ठकारस्य द्वित्वम् ।

वेदसमयुक्ष्मायंत्त्वासृजामिप्प्रजाब्भ्यः ॥ ५३ ॥ रुद्राःसृ

सृज्ज्यं । पृथिवीम्बृहज्ज्योतिꣳसमीधिरे । तेषांम्भानुरजंस्त्रऽइ

च्छुक्कोदेवेषुंरोचते ॥५४॥ सꣳसृष्टांव्वसुभिः ॥ सꣳसृष्टांव्वसुभी

रुद्रैर्द्धीरैः कर्म्मण्याम्मृदम् ॥ हस्ताब्भ्याम्मृद्वीङ्कृत्वासिनी

वालीकृणोतुताम् ॥ ५५ ॥ सिनीवालीसुंकपर्द्दा । सुंकुरीरा

स्वौपशा ॥ सातुब्भ्यंमदितेमह्योखान्दंधातुहस्तयोः ॥ ५६ ॥

उखाङ्कृणोतु ॥ उखाङ्कृणोतुशक्त्यांबाहुब्भ्यामदितिर्द्धिया ॥

शु. य. संहि. मातापुत्त्रँय्यथोपस्त्थेसाग्निम्बिभर्त्तुगर्ब्भऽआ ॥ मखस्यशि पू. अ.
॥१०१॥ रोसि॥५७॥ वसवस्त्वा। कृण्वन्तुगायत्त्रेणच्छन्दसाङ्गिरस्वद्ध्रु ॥ ११ ॥
वासिपृथिव्यसिधारयामयिप्प्रजाꣳरायस्प्पोषङ्गौपत्त्यᳫ्सुवी
र्य्यᳫ्सजातान्य्यजमानायरुद्द्रास्त्वाकृण्वन्तुत्रैष्टुभेनच्छन्दसा
ङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसिधारयामयिप्प्रजाꣳरायस्प्पोषङ्गौ
पत्त्यᳫ्सुवीर्य्यᳫ्सजातान्य्यजमानायादित्त्यास्त्वाकृण्वन्तु ॥१०१५
जागतेनच्छन्दसाङ्गिरस्वद्ध्रुवासिद्यौरसिधारयामयिप्प्रजाꣳ

रायस्पोषङ्गौपत्त्यꣳसुवीर्यꣳसजातान्यजमानायविश्वैत्त्वा
देवाव्वैश्वानराꣳकृण्णवन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वद्ध्रुवासिदि
शोसिधारयामयिप्प्रजाꣳरायस्पोषङ्गौपत्त्यꣳसुवीर्यꣳस
जातान्यजमानाय ॥ ५८ ॥ अदित्त्यैरास्स्नासि ॥ अदित्त्यैरा
स्नासयदितिष्टेबिलङ्गृभ्णातु ॥ कृत्वायसामहीमुखामृन्मयीं
योनिमग्नयै॥ पुत्रेभ्यꣳप्प्रायच्छददितिꣳश्रपयानिति॥५९॥
वसवस्त्वा । धूपयन्तुगायत्रेणच्छन्दसाङ्गिरस्वद्रुद्रास्त्वाधूप

यन्तुत्रैष्टुंभेनच्छन्दंसाङ्गिरस्वदांदित्त्यास्त्वांधूपयन्तुजागतेन
च्छन्दंसाङ्गिरस्वद्विश्वेंत्वादेवाव्वैश्वानराधूंपयन्त्वानुंष्टुभेनच्छ
न्दंसाङ्गिरस्वदिन्द्रंस्त्वाधूपयतुव्वरुंणस्त्वाधूपयतुव्विष्णुंस्त्वा
धूपयतु ॥ ६० ॥ [ ११-५ ] [1]अदितिष्ट्वा । देवीव्विश्वदेव्यावतीपृ
थिव्याःसधस्थेऽअङ्गिरस्वत्खनत्ववटदेवानान्त्वापत्नीर्देवी
र्व्विश्वदेव्यावतीःपृथिव्याःसधस्थेऽअङ्गिरस्वद्दधतूखेधिषणा



१ अदितिष्ट्वादेवी । इति पदम् अत्र संधिरंशुरदितिः ( शु. य. प्रा. ३ अ. ७६ सू. ) इत्यनेन सन्धिः अंशुः अदितिः एतेषां विसर्जनीयसकारस्य षत्वं समानपदे विधीयते । तेनात्र अदितेर्विसर्जनीयस्य षत्वे ष्टुत्वे ऊष्मान्तस्थाभ्यश्च स्पर्शः ( शु. य. प्रा. ४ अ. १०२ सू. ) इति टकारस्य द्वित्वम् ।

स्त्वादेवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वदभी
न्धतामुखेवरूत्रीष्ट्वादेवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽ
अङ्गिरस्वच्छ्रपयन्तूखेग्नास्त्वादेवीर्विश्वदेव्यावतीः पृथिव्याः
सधस्थेऽअङ्गिरस्वत्पचन्तूखेजनयस्त्वाच्छिन्नपत्रादेवीर्वि
श्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वत्पचन्तूखे ॥ ६१ ॥
मित्रस्यचर्षणीधृतः ॥ मित्रस्यचर्षणीधृतोवोदेवस्यसानसि ॥

---

१ वरूत्रीः त्वा इति पदम्। अत्र मातृभिरर्चिभिःपायुभिर्वरूत्रीः (शु. य. प्रा. ३ अ. ७९ सू.) इत्यनेन एकाक्षरे त्वापरे वरूत्रीः इत्यस्य विसर्जनीयस्य षत्वं षात्तथौमूर्धन्यम् (शु. य. प्रा. ३ अ. ८० सू.) इति मूर्धन्यत्वे ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इति द्वित्वे वरूत्रीष्ट्वा।

॥१०२॥ ॥ ११ ॥

द्युम्नञ्चित्रश्श्रवस्तमम् ॥ ६२ ॥ देवस्त्त्वा । सवितोद्वपतुसुपा
णिःस्वङ्गुरिःसुबाहुरुतशक्त्या ॥ अव्यथमानापृथिव्यामाशा
दिशऽआपृण ॥ ६३ ॥ उत्थायबृहती । भवोदुतिष्ठध्रुवात्त्वम् ॥
मित्रैतान्तऽउखाम्परिददाम्म्यभित्त्याऽएषामाभेदि ॥ ६४ ॥
वसवस्त्त्वा ॥ वसवस्त्त्वाच्छृन्दन्तुगायत्रेणच्छन्दसाङ्गिरस्वद्रु
द्रास्त्त्वाच्छृन्दन्तुत्रैष्टुभेनच्छन्दसाङ्गिरस्वदादित्यास्त्त्वाच्छृ ॥ १०३ ॥
न्दन्तुजागतेनच्छन्दसाङ्गिरस्वद्विश्वेत्त्वादेवावैश्वानराऽआच्छृ

न्दुन्त्वानुंष्टुभेनुच्छन्दंसाङ्गिरुस्वत् ॥ ६५ ॥ [ ५-६ ] आकूंति
मुग्निम् ॥ आकूंतिमुग्निम्प्रयुजऽंस्वाहुामनोंमुेधामुग्निम्प्रयु
जऽंस्वाहांचित्तंविंज्ञांतमुग्निम्प्रयुजऽंस्वाहांवाचोविधृंतिम्
ग्निम्प्रयुजऽंस्वाहाप्प्रुजापंतयुेमनंवुेस्वाहुाग्नयेंवैश्वानुरायुस्वा
हां ॥ ६६ ॥ विश्वोंदुेवस्यं । नुेतुर्म्मर्त्तोंवुरीतसुक्ख्यम् ॥ वि
श्वोंरायऽइंषुध्यतिद्युम्नंवृंणीतपुष्यसेस्वाहां ॥ ६७ ॥ मासु ।
भिंत्त्थामासुरिषोम्वंधृष्णुवीरयंस्वसु ॥ अुग्निश्चेदङ्करिष्य

थꣳ ॥ ६८ ॥ दृꣳहस्वदेवि । पृथिविस्वुस्त्तयंऽआसुरीमाया
स्वधयांकृतासि ॥ जुष्टन्देवेब्भ्यंऽइदमंस्तुहव्यमरिष्टाच्त्वमुदि
हियज्ञेऽअस्मिन् ॥ ६९ ॥ द्र्वन्नꣳसर्प्पिरासुतिꣳ । प्प्रत्क्कोहो
ताव्वरेण्ण्यꣳ ॥ सहंसस्पुत्त्रोऽअद्भुतꣳ ॥ ७० ॥ शतम् ॥ ५०० ॥
परस्याऽअधि । संव्वतोवराँ२॥ऽअब्भ्यातर ॥ यत्त्राहमस्म्मि
ताँ२॥ऽअव ॥ ७१ ॥ परमस्याः परावतः ॥ परमस्याः
परावतोरोहिदंश्वऽइहागंहि ॥ पुरीष्ष्यः पुरुप्प्रियोग्ग्नेत्त्वन्त

१ सहसः पुत्रः इत्यत्र रायः सहसः पोषपुत्रयोः (शु.य.प्रा. ३ अ. २५ सू.) इत्यनेन रायसहसशब्दयोः सकारस्य पोषपुत्रपरयोःपरयोःक्रमेण सत्वम्। सहसस्पुत्रः।

रामृधः ॥ ७२ ॥ यदंग्ने ॥ यदंग्नेकानिकानिंचिदातेदारू
णिदुद्ध्मसिं ॥ सर्व्वन्तदंस्तुतेघृतन्तज्जुषस्वयविष्ठ्य ॥ ७३ ॥
यदत्ति ॥ यदत्त्युंपजिह्विकायद्वुम्म्रोऽअंतिसर्प्पति ॥ सर्व्वन्त
दंस्तुतेघृतन्तज्जुषस्वयविष्ठ्य ॥ ७४ ॥ अहंरहरप्प्रंयावम् ॥
अहंरहरप्प्रंयावम्भरन्तोश्श्वायेवतिष्ठंतेघासमंस्म्मै ॥ रायस्प्पोषे
णसमिषामदन्तोग्ग्नेमातेप्प्रतिंवेशारिषाम ॥ ७५ ॥ नाभापृ
थिव्याः ॥ संमिधानेऽअग्ग्नौरायस्प्पोषायबृहतेहंवामहे ॥ इर

म्मदम्बृहदुंक्थँऽस्यजंत्रज्ञेतांरमुग्निम्पृतंनासुसासुहिम् ॥७६॥
याःसेनां ॥ याःसेनांऽअभीत्त्वंरीराव्याधिनीरुगंणाऽउत ॥
येस्तेनायेचतस्कंरास्ताँस्तेंऽअग्नेपिंदधाम्म्यास्ये ॥ ७७ ॥
दᳫंष्ट्राब्भ्याम्मलिम्म्लून् ॥ दᳫंष्ट्राब्भ्याम्मलिम्म्लूञ्जम्भ्यै
स्तंस्कंराँ२॥ऽउत ॥ हनुंब्भ्याᳫंस्तेनान्भंगवस्ताँस्त्वङ्खांदु
सुखांदितान् ॥ ७८ ॥ येजनैषु । मलिम्म्लंवस्तेनासस्तस्कं



---

१ तस्काराँऽउत । तत् करांऽउत इति पदे । अत्र तद्धहलौ करपत्योस्तल्लोपश्च (शु. य. प्रा. ३ अ. ५२ सू.) इत्यनेन तच्छब्दस्य करशब्दपरे सकारे पूर्वस्य तद्घटिततकारस्य लोपे च कृते ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन ककारस्य द्वित्वम् ।

राव्वनें ॥ येकक्षेँष्ष्वघायवुस्त्ताँस्त्तैंद्धामिजम्भंयोः ॥ ७९ ॥
योऽअस्म्मब्भ्यंम् ॥ योऽअस्म्मब्भ्यंम्मरातीयाद्यश्श्चंनोद्द्वेषंते
जनंः ॥ निन्दाद्योऽअस्म्मान्धिप्प्सांच्चसर्व्वन्तम्मंस्म्मसाकुरु
॥ ८० ॥ सᳪंशितम्मे ॥ सᳪंशितम्मेब्ब्रह्मसᳪंशितंव्वीर्ययंम्ब
लंम् ॥ सᳪंशितङ्क्षत्रञ्जिष्णुयस्याहमस्म्मिपुरोहितः ॥ ८१ ॥
उदेषाम् ॥ उदेषाम्बाहूऽअंतिरमुद्वर्च्चोऽअथोबलंम् ॥ क्षिणोमि
ब्ब्रह्मणामित्रानुन्नंयामिस्वाँ२॥ऽअहम् ॥ ८२॥ अन्नपतेन्नंस्य ।

नोदेह्यनमीवस्यंशुष्मिणं॑ ॥ प्रप्रंदातारंन्तारिषऽऊर्ज्जंन्नोधे
हिद्विपदेचतुंष्पदे ॥ ८३ ॥ [ १८-७ ] ॥ इतिश्रीवाजसनेय
संहितायाम् एकादशोऽध्यायः ॥ ११ ॥ श्रीवेदपुरुषाय नमः ॥
अनुवाकसूत्रम् ॥ दृशानःसप्तदश, दिवस्परिद्वादश, समिधा
ग्निंपंचदशा, पेतसप्तदशा, सुन्वन्तमयजमानंत्रयोदश, याऽ
ओषधीः सप्तविꣳशति, मांमाषोडश, सप्तसप्तदशꣳशतम् ॥
[ अ. १२ मं. ११७ अनु. ७ ] हरिः ॐ ॥ दृशानोरुक्मः ॥

दृशानोरुक्मऽउर्व्याव्यद्यौद्दुर्म्मर्षमायुःश्रियेरुचानः ॥ अग्नि
रमृतोऽअभवद्वयोभिर्य्यदेनन्द्यौरजनयत्सुरेताः ॥ १ ॥ नक्तो
षासासमनसा ॥ नक्तोषासासमनसाव्विरूपेधापयेतेशिशु
मेकꣳसमीची ॥ द्यावाक्षामारुक्मोऽअन्तर्व्विभातिदेवाऽअग्नि
न्धारयन्द्रविणोदाः ॥ २ ॥ व्विश्वारूपाणि ॥ व्विश्वारूपाणि
प्प्रतिमुञ्चतेकविः प्प्रासावीद्भद्रन्द्विपदेचतुष्प्पदे ॥ व्विनाकम

---

[1] दृशानः । अत्र ऋषरेभ्यः ( शु. य. प्रा. ३ अ. ८५ सू. ) इत्यनेन समानपदे स्वरयवहकपैश्च ( शु. य. प्रा. ३ अ. ८६ सू. ) इत्यनेन एतैरेव व्यवधानेऽपि । णत्वविधानात्र णत्वप्राप्तिः । तथापि शिलिसिवर्गमध्यमव्यवहितोऽपि ( शु. य. प्रा. ३ अ. ९५ सू. ) इत्यनेन णत्वनिषेधः शिष्यबुद्धिव्युत्पादनार्थो ज्ञेयः ।

कख्यत्त्सविताव्वरेण्ण्योनुप्प्रयाणमुषसोव्विराजति ॥ ३ ॥ सुपर्ण्णो
सि । गुरुत्त्माँस्त्रिवृत्तेशिरोगायत्त्रञ्चक्षुर्बृहद्रथन्तरेपक्षौ ॥ स्तोमऽ
आत्त्माच्छन्दाᳫंस्यङ्गानियजूᳫंषिनाम ॥ सामतेतनूर्व्वामदे
व्यँय्यज्ञायज्ञियम्पुच्छन्धिष्ण्ण्याः शफाः ॥ सुपर्ण्णोसिगरु
त्त्मान्दिवङ्गच्छस्वः पत ॥ ४ ॥ व्विष्ण्णोःक्क्रमः ॥ व्विष्ण्णोः
क्क्रमोसिसपत्त्नहागायत्त्रञ्छन्दऽआरोहपृथिवीमनुविक्क्रमस्व
व्विष्ण्णोःक्क्रमोस्यभिमातिहात्त्रैष्टुभञ्छन्दऽआरोहान्तरिक्षम

नुविक्क्रंमस्वुव्विष्ण्णो॑ःक्क्रमौ॑स्यरातीय॒तोहु॒न्ताजाग॑तु॒ञ्छन्दु॒ऽआ
रो॑हु॒दिव॒मनु॒विक्क्रंमस्वुव्विष्ण्णो॑ःक्क्रमौ॑सिश॒त्रूयतोहु॒न्तानु॑ष्टुभ॒
ञ्छन्दु॒ऽआरो॑हु॒दिशो॒नु॒विक्क्रंमस्व ॥ ५॥ अक्क्र॑न्ददु॒ग्ग्निः ॥ अक्क्र
न्ददु॒ग्ग्निस्त्त॒नयं॑न्निव॒द्यौः क्क्षामा॒रेरि॑हद्वी॒रुधं॑ःसमु॒ञ्ज॒न् ॥ स॒द्यो
जं॑ज्ञा॒नोव्विहीमि॒द्धोऽअक्ख्य॒दारो॑दंसीभा॒नुनां॑भा॒त्त्य॒न्तः ॥६॥
अग्ग्ने॑भ्भ्यावर्त्तिन् ॥ अग्ग्ने॑भ्भ्यावर्त्तिन्न॒भिमा॒निवं॑र्त्त॒स्वायुं॑षा॒व्वर्च्च॑
साप्प्र॒जया॒धने॑न ॥ स॒न्न्यामे॒धया॑र॒य्यापोषे॑ण ॥ ७॥ अग्ग्ने॑ऽ

अङ्गिरः। शतन्तेसन्त्वावृतः सहस्रन्तऽउपावृतः ॥ अधा
पोषस्यपोषेणपुनर्नोनष्टमाकृधिपुनर्नोरयिमाकृधि ॥ ८ ॥ पुनं
रूर्जा। निवर्त्तस्वपुनरग्नऽइषायुषा ॥ पुनर्नःपाह्यꣳहसः ॥९॥
सहरय्या। निवर्त्तस्वाग्नेपिन्वस्वधारया ॥ विश्वप्स्न्याविश्वत
स्परि ॥ १० ॥ आत्वा। हार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः ॥
विशस्त्वासर्वावाञ्छन्तुमात्वद्राष्ट्रमधिभ्रशत् ॥ ११ ॥
उदुत्तमम् ॥ उदुत्तमम्वरुणपाशमस्मदवाधमंविमध्यमꣳ

अथाय[1] ॥ अथाव्वयमादित्यव्व्रतेतवानागसोऽअदितयेस्याम ॥ १२ ॥ अग्ग्रेबृहन् ॥ अग्ग्रेबृहन्नुषसामूर्द्ध्वोऽअस्त्थान्निर्ज्जगन्न्वान्तमसोज्ज्योतिषागात् ॥ अग्ग्निर्ब्भानुनारुशतास्वङ्गऽआजातोव्विश्श्वासद्मान्न्यप्प्राः ॥ १३ ॥ हꣳसःशुचिषत् ॥ हꣳसःशुचिषद्वसुरन्तरिक्षसद्धोताव्वेदिषदतिथिर्द्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्द्रिजाऽऋतम्बृहत्

१ अथय इति पदम् । अथोदारिंथशोचपनयसादयर्जुंवृषशत्रुसलक्ष्माधारात्यृतभवत यकारे (शु. य. प्रा. ३ अ. ११२ सू.) इत्यनेन एतेषां यकारे परे दीर्घः । तेन अथाय इति पदम् ।

सं. १९

॥ १४ ॥ सीदुत्त्वम् ॥ सीदुत्त्वम्मातुरस्याऽउपस्त्थेव्विश्श्वान्य
ग्ग्नेव्वयुनानिव्विद्वान् ॥ मैनान्तपसामार्च्चिषाभिशोचीरन्तरं
स्याᳪंशुक्क्रज्ज्योतिर्व्विभाहि ॥ १५ ॥ अन्तरग्ग्ने । रुचात्त्वमु
खायाᳪंसदंनेस्वे ॥ तस्यास्त्त्वᳯंहरसातपञ्जातवेदᳪंशिवोभव
॥ १६ ॥ शिवोभूत्त्वा । मह्यमग्ग्नेऽअथोसीदशिवस्त्त्वम् ॥
शिवाःकृत्त्वादिशᳪंसर्व्वाᳪंस्वँय्योनिमिहासदᳪं॥ १७ ॥ [ १७-१ ]
दिवस्प्परिं । प्प्रथमञ्जज्ज्ञेऽअग्ग्निरस्म्मद्द्वितीयम्परिंजातवेदाᳪं ॥

तृतीयमप्सुनृमणाऽअजस्रमिन्धानऽएनञ्जरतेस्वाधीः ॥ १८ ॥
विद्माते ॥ विद्माते अग्नेत्रेधात्रयाणिविद्माते धामविभृ
तापुरुत्रा ॥ विद्मातेनामम्परमङ्गुहायद्विद्मातमुत्सँय्यतऽ
आजगन्थ ॥ १९ ॥ समुद्रेत्त्वा । नृमणाऽअप्स्वन्तर्नृचक्षाऽ
ईधेदिवोऽअग्नऽऊधन् ॥ तृतीयेत्त्वारजसितस्त्थिवाꣳसमपा
मुपस्त्थेमहिषाऽअवर्द्धन् ॥ २० ॥ अक्रन्ददग्निः ॥ अक्रन्द

---

१ नृमणा । अत्र ऋषरेभ्यो नकारो णकारं समानपदे ( शु. य. प्रा. ३ अ. ८५ सू. ) इत्यनेन णत्वाप्राप्तौ स्वरयवहकपैश्च ( शु. य. प्रा. ३ अ. ८६ सू. ) एतैर्व्यवधानेऽपि ऋषरेभ्यो णत्वविधानात्पवर्गस्य व्यवधानेऽपि णत्वे नृमणा इति रूपम् ।

दुग्निस्त्तनयंन्निवृद्ध्यौ॑ःक्षामारेरिंहद्दीरुधं॑ःसमुञ्जन् ॥ सुद्योज
ज्ञानोव्विहीमिद्धोऽअक्खदारोदंसीभानुनांभात्त्यन्तः ॥२१॥
श्रीणामुदारः ॥ श्रीणामुदारोधुरुणोरयीणाम्मंनीषाणाम्प्रा
र्पणःसोमंगोपाः ॥ व्वसुं॑ःसूनुःसहंसोऽअप्सुराजाव्विभात्त्य
ग्ग्रंऽउषसांमिधानः ॥ २२ ॥ व्विश्श्वंस्यकेतुः ॥ व्विश्श्वंस्यकेतु
र्ब्भुवंनस्यगर्ब्भऽआरोदंसीऽअपृणाज्जायंमानः ॥ व्वीडुञ्चिदद्रि
मभिनत्त्परायञ्जनायदुग्निमयंजन्तपञ्च ॥ २३ ॥ उशिक्पा ॥११०॥

वकः ॥ उशिक्पावकोऽअरतिःसुमेधामर्त्तेष्वग्निरमृतोनि
धायि ॥ इयर्त्तिधूममरुषम्भरिभ्रदुच्छुक्रेणशोचिषाद्यामिनं
क्षन् ॥ २४ ॥ दृशानोरुक्मः ॥ दृशानोरुक्मऽउर्व्याव्यद्यौद्दु
र्मर्षमायुःश्रियेरुचानः ॥ अग्निरमृतोऽअभवद्वयोभिर्य्य
देनन्द्यौरजनयत्सुरेताः ॥ २५ ॥ यस्ते ॥ यस्तेऽअद्यकृण
वद्भद्रशोचेपूपन्देवघृतवन्तमग्ने ॥ प्रतन्नयप्प्रतरंवस्योऽअच्छा
भिसुम्नन्देवभक्तंयविष्ठ ॥ २६ ॥ आतम् ॥ आतम्भजसौ

श्श्रवसेष्वंग्ग्न ऽउक्क्थ ऽउंक्क्थ ऽआभंज शस्यमाने ॥ प्प्रियः सूर्य्यै
प्प्रियो ऽअग्ग्नाभंवात्त्युज्जातेनंभिनदुदुज्जानिंत्त्वैः ॥ २७ ॥
त्वामंग्ग्ने ॥ त्वामंग्ग्नेयजंमाना ऽअनुद्यून्विश्श्वावसुंदधिरेव्वा
र्य्याणि ॥ त्वयांसहद्द्रविंणमिच्छमांनाव्व्रजङ्गोमंन्तमुशिजोव्वि
वंव्व्रुः ॥ २८ ॥ अस्त्ताव्व्यग्ग्निः ॥ अस्त्ताव्व्यग्ग्निन्नंराᳬंसुशे
वोव्वैश्श्वानर ऽऋषिंभिः सोमंगोपाः ॥ अद्द्वेषेद्द्यावांपृथिवीहुंवेम
देवांधत्त्तरयिमस्म्मेसुवीरंम् ॥ २९ ॥ [ १२-२ ] समिधाग्ग्निम् ॥

सुमिधाग्ग्निन्दुवस्यतघृतैर्ब्बौधयुतातिथिम् ॥ आस्मिन्हुव्याजु

होतन ॥ ३० ॥ उदुत्त्वा ॥ उदुत्त्वाव्विश्श्वेदेवाऽअग्ग्नेभरन्तु

चित्तिभिः ॥ सनोभवशिवस्त्वꣳसुप्प्रतीकोव्विभावसुः ॥३१॥

प्रेत् ॥ प्रेदग्ग्नेज्ज्योतिष्म्मान्याहिशिवेभिरर्च्चिभिष्ट्वम्[1] ॥ बृहद्भि

र्ब्भानुभिर्ब्भासन्माहिꣳसीस्तन्वाप्प्रजाः ॥ ३२ ॥ अक्रन्द

---

१ अर्चिभिस्त्वम् इति पदम् । अत्र मातृभिरर्चिभिः पायुभिर्वरूत्रीः (शु. य. प्रा. ३ अ. ७९ सू.) इत्यनेन मातृभिः आर्चिभिः पायुभिः वरूत्रीः एतेषां पदानां एकाक्षरे प्रत्यये विसर्जनीयसकारस्य षः। तेन सस्य षत्वे, षात्तथौ मूर्धन्यम् (शु. य. प्रा. ३ अ. ८० सू.) इत्यनेन त्वमित्यस्य तस्य मूर्द्धन्ये टकारे ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इति टस्य द्वित्वे आर्चिभिष्ट्वम्।

दुग्निः ॥ अक्रन्ददग्निस्तनयन्निवद्यौःक्षामारेरिहद्वीरुधः
समञ्जन् ॥ सद्योजज्ञानोविहीमिद्धोऽअक्ख्यदारोदसीभानु
नाभात्यन्तः ॥ ३३ ॥ प्रप्रायम् ॥ प्रप्रायमग्निर्भरतस्य
शृण्वेवियत्सूर्य्योनरोचतेबृहद्भाः ॥ अभियःपूरुम्पृतनासुत
स्त्थौदीदायदैव्योऽअतिथिꣳशिवोनः ॥ ३४ ॥ आपोदेवीꣳ ॥
आपोदेवीꣳप्रतिगृभ्णीतभस्मैतत्स्योनेकृणुद्ध्वꣳसुरभाऽउ
लोके ॥ तस्मैनमन्ताञ्जनयꣳसुपत्नीर्म्मातेवपुत्रम्बिभृता

प्प्स्वेनत् ॥ ३५ ॥ अप्प्स्वग्ग्ने ॥ अप्प्स्वग्ग्नेसधिष्ट्व[2]सौषधी

रनुंरुद्ध्यसे ॥ गर्ब्भेसञ्जायसेपुनः ॥ ३६ ॥ गर्ब्भोऽअसि ॥

गर्ब्भोऽअस्योषधीनाङ्गर्ब्भोव्वनस्प्पतीनाम् ॥ गर्ब्भोव्विश्श्वस्य

भूतस्याग्ग्नेगर्ब्भोऽअपामसि ॥ ३७ ॥ प्रसद्यभस्म्मना ॥

प्रसद्यभस्म्मनायोनिमपश्श्चपृथिवीमग्ग्ने ॥ सह्सृज्ज्यमातृभिष्ट्व[3]

---

१ सधिष्ट्व । अत्र सधिस्त्व इति पदद्वयम् । अत्र विसर्गस्य परसवर्णे, सधिरंशुरदितिः ( शु. य. प्रा. ३ अ. ७८ सू. ) इत्यनेन षत्वे ऊष्मान्तस्थास्यश्च स्पर्शे इत्यनेन टस्य द्वित्वम् । २ सः ओषधीः इति पदद्वयम् । अत्र सऽओषधीमयोः ( शु. य. प्रा. ३ अ. १५ सू. ) इत्यनेन ओषधीपरे सः पदस्य विसर्जनीयस्य लोपे, सन्ध्यक्षर ऐकारौकारौ ( शु. य. प्रा. ४ अ. ५७ सू. ) इत्यनेन वृद्धौ सौषधी इति पदम् । ३ मातृभिस्त्वम् इति पदम् । मातृभिर-

ज्योतिष्म्मान्पुनरासंदः ॥ ३८ ॥ पुनंरासद्य ॥ पुनंरासद्य
सदंनमपश्चं पृथिवीमंग्ने ॥ शेषेंमातुर्य्यथोपस्त्थेन्तरंस्याᳪ
शिवतंमः ॥ ३९ ॥ पुंनरूर्ज्जा । निर्वर्त्तस्वपुनंरग्नऽइषायुंषा ॥
पुनर्नःपाह्यᳪहंसः ॥ ४० ॥ सहरय्या । निर्वर्त्तस्वाग्नेपिन्न्वं
स्वधारंया ॥ विश्वप्स्न्याविश्वतस्प्परिं ॥ ४१ ॥ बोधांमे ।
ऽअस्यवचंसोयविष्ठमᳪहिंष्ठस्यप्प्रभृंतस्यस्वधावः ॥ पीयंति ॥११३॥

चिंभिः पायुभिर्वरूत्रीः (शु. य. प्रा. ३ अ. ७९ सू.) इत्यनेन मातृभिः अर्चिभिः पायुभिः वरूत्रीः एतेषां पदानां विसर्जनीयस्य सकारस्य षकार एकाक्षरे प्रत्यये परे इति षत्वे च षात्तथौ मूर्धन्यम् (शु. य. प्रा. ३ अ. ८० सू.) इत्यनेन तस्य मूर्धन्ये टकारे ऊष्मान्त० इत्यनेन टस्य द्वित्वम् ।

त्त्वोऽअनुंत्त्वोगृणातिव्वृन्दारुष्ट्टे[1]तत्त्वंव्वन्देऽअग्ग्ने ॥ ४२ ॥ स
बोधि । सूरिर्म्मघवाव्वसुपतेव्वसुदावन् ॥ सुयोद्ध्यस्म्मद्द्वेषाᳬसि
विश्श्वकर्म्मणेस्वाहा ॥ ४३ ॥ पुनंस्त्वा । दित्त्यारुद्द्राव्वसवᳬ
समिन्धताम्पुनर्ब्ब्रह्माणोव्वसुनीथयज्ज्ञैः ॥ घृतेनत्त्वन्तन्न्वंव्वर्द्धय
स्वसत्त्याःसन्तुयजमानस्यकामाᳬ ॥४४॥ [ १५-३ ] अपेत ॥
अपेतव्वीतव्विचसर्प्पतातोयेत्रस्त्थपुराणायेचनूतनाᳬ ॥ अदा

1 वृन्दारुष्ट्टे अत्र वृन्दारुः ते इति पदद्वयम् । वृन्दारुर्मोकिः ( शु. य. प्रा. ३ अ. ७४ सू. ) इत्यनेन वृन्दारोः विसर्गस्य परसवर्णे, षात्तथौ मूर्धन्यम् इत्यनेन च ते इत्यस्य मूर्धन्ये टकारे कृते ऊष्मान्तस्थाभ्यश्च स्पर्शः ( शु. य. प्रा. ४ अ. १०२ सू. ) इति टकारस्य द्वित्वम् ।

॥११४॥ द्युम्नोवसानम्पृथिव्याऽअक्रान्निमम्पितरौंल्लोकमस्म्मै ॥ ४५ ॥
सँञ्ज्ञानमसि । कामधरणम्मयितेकामधरणम्भूयात् ॥ अग्ग्ने
र्ब्भस्म्मास्यग्ग्नेःपुरीषमसिचितस्त्थपरिचितऽऊर्द्धचितःश्रय
द्ध्वम् ॥ ४६ ॥ अयꣳसः ॥ अयꣳसोऽअग्ग्निर्य्यस्म्मिन्त्सो
ममिन्द्रःसुतन्दधेजठरेव्वावशानः ॥ सहस्रियंव्वाजमत्त्य
न्नसप्तिꣳससवान्त्सन्त्स्तूयसेजातवेदः ॥ ४७ ॥ अग्ग्नेयत् ॥ ॥११५॥
अग्ग्नेयत्तेदिविव्वर्च्चःपृथिव्यांँऽयदोषधीष्व्वप्प्स्वायजत्र ॥

सेनान्तरिक्षमुर्व्वाततन्थत्त्वेषश्सभानुरर्ण्णवोनृचक्क्षाः[1] ॥४८॥
अग्ग्नेदिवः ॥ अग्ग्नेदिवोऽअर्ण्णमच्छाजिगास्यच्छादेवाँ२॥
ऽऊँचिषेधिष्ण्याये ॥ यारोचनेपरस्त्तात्सूर्य्यस्ययाश्च्चावस्त्ता
दुपतिष्ठन्तऽआपः ॥ ४९ ॥ पुरीष्ष्यासोऽअग्ग्नयः । प्प्रा[2]व
णेभिःसजोषसः ॥ जुषन्ताँऽयज्ञमद्रुहोनमीवाऽइषोमहीः
॥ ५० ॥ इडामग्ग्ने । पुरुदꣳसꣳसनिङ्गोःशश्श्वत्तमꣳहवमा

---

१ यत्र यकारवकाररहितदीर्घस्वरितस्वरात्परो विसर्गस्तत्र कनिष्ठिकाक्षेपः सर्वत्र कार्यः । २ प्रावणेभिः । अत्र प्रवणश्रृङ्गयासेषु (शु. य. प्रा. ३ अ. १०५ सू.) इत्यनेन वन श्रृङ्ग यास इत्येतेषु परेषु प्र इत्येतत्पदस्य ह्रस्वाकारस्य दीर्घाकारो विधीयते । अत्र प्रशब्दाद्वनशब्दः परः । तेन प्रशब्दाकारो दीर्घः ।

नायसाध ॥ स्यान्नंःसूनुस्त्तनंयोव्विजावाग्ग्नेसातैंसुमतिर्भूँत्त्व
स्स्मे ॥ ५१ ॥ अयन्तें ॥ अयन्तेयोनिंर्ऋत्त्वियोयतोंजातोऽ
अरोंचथाः ॥ तञ्जानन्नंग्ग्नऽआरोहाथांनोव्वर्द्धयारयिम् ॥५२॥
च्चिदंसि ॥ चिदंसितयांदेवतंयाङ्गिरस्वद्ध्रुवासींदपरिचिदंसित
यांदेवतंयाङ्गिरस्वद्ध्रुवासींद ॥ ५३ ॥ लोकम्पृंण । च्छिद्रम्पृ
णाथोंसीदद्ध्रुवात्त्वम् ॥ इन्द्राग्ग्नीत्त्वाबृहस्प्पातिंरस्मिन्न्योनां ॥ ११५ ॥
वसीषदन् ॥ ५४ ॥ ताऽअंस्य ॥ ताऽअंस्यसूदंदोहसःसोमंᳫ

श्रीणन्तिपृश्न्नयः ॥ जन्मन्देवानांव्विशंस्त्रिष्ष्वारोचनेदिवः ॥ ५५ ॥ इन्द्रंव्विश्श्वाः ॥ इन्द्रंव्विश्श्वाऽअवीवृधन्त्समुद्द्रव्यच सङ्गिरः ॥ [1]रथीतमꣳ रथीनांव्वाजानाꣳसत्पतिम्पतिम् ॥ ५६ ॥ समितम् ॥ समितꣳसङ्कल्प्पेथाꣳसम्प्प्रियौरोचिष्ण्णूसुमनस्यमानौ ॥ इषमूर्ज्जमभिसंव्वसानौ ॥ ५७ ॥ सं[2]वाम् ॥ संवा

---

१ रथितमम् । इति पदम् । रथि तकारनकारयोः (शु. य. प्रा. ३ अ. ११२ सू.) इत्यनेन तकारे नकारे च परे रथि इत्येतत्पदं दीर्घं भवति। तेन रथीतमम् । २ उपसर्गात्परो यस्तु स वकारो लघुर्मतः। वो वां वा वै मंत्रपाठे लघवो गुरवः पदे। इति वामित्यस्यात्र लघुत्वम् ।

 म्मनांꣳसिसंव्व्रतासमुंचित्तान्याकरंम् ॥ अग्ग्नेंपुरीष्याधिपा
भंवत्त्वन्नऽइषमूर्ज्जँऽयजंमानायधेहि ॥ ५८ ॥ अग्ग्नेत्त्वम् ॥
अग्ग्नेत्त्वम्पुंरीष्योरयिमान्पुंष्टिमाँ२॥ऽअंसि ॥ शिवाःकृत्त्वा
दिशःसर्व्वाःस्वँय्योनिंमिहासदः ॥ ५९ ॥ भवंतन्नः ॥ भवं
तन्नःसमंनसौसचेंतसावरेपसौं ॥ मायज्ञꣳहिꣳसिष्ट्टम्मायज्ञ
पंतिञ्जातवेदसौशिवौभंवतमद्यनंः ॥ ६० ॥ मातेवंपुत्त्रम् ॥ माते 

१ अत्र मकारोच्चारे दक्षिणहस्तेन मुष्ट्याकृतिः कार्या। यत्र यत्रावसानगतो मकारस्तत्र मुष्ट्याकृतिः "मुष्ट्याकृतिर्मकारे स्यात्" इति या. शिक्षायाम्।

वंपुत्रम्पृथिवीपुरीष्य्मुग्निꣳस्वेयोनांवभारुखा ॥ तांविश्वैर्द्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्म्माविमुञ्चतु ॥ ६१ ॥

[ १७-४ ] असुन्वन्तुमयंजमानम् ॥ असुन्वन्तुमयंजमानमिच्छस्त्तेनस्येत्त्यामन्विहितस्क्करस्य ॥ अन्यमुस्म्मदिच्छसातंऽइत्त्यानमोदेविनिर्ऋतेतुब्भ्यंमस्त्तु ॥ ६२ ॥ नमुःसुते ॥ नमुःसुतेनिर्ऋतेतिग्ग्मतेजोयुस्म्मयंविचृताबुन्धमेतम् ॥ युमे

१ वकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूतरः । आदौ गुरुर्लघुर्मध्ये पदान्ते च लघूतरः । यत्र पदादौ वकारस्तत्रोच्चारणं गुरुभूतम् । यत्र पदादेर्मध्ये यदा च पदस्यान्ते वकारस्तदा तु क्रमेण लघु लघूतरं मध्यमवृत्त्योच्चारणम् । अत्र वकारः पदस्य मध्ये वर्तते तेन न गुरुभूतत्वच्चारणश्चेति इति ।

न्त्वँऽस्युम्म्यासँविदुानोत्त्तमेनाकेऽअधिँरोहयैनम् ॥ ६३ ॥

॥११७॥ यस्यांस्त्ते। घोरऽआसञ्जुहोम्म्येषाम्बुन्धानांमवुसर्ज्जँनाय॥ सा

न्त्वाजनोभूमिरितिप्प्रमन्दंतेनिर्ऋँतिन्त्वाहम्परिवेदविश्श्वतंः

॥ ६४ ॥ यन्तें। देवीनिर्ऋँतिराबुबन्धुपाशंङ्ग्रीवास्वंविचृत्त्यम् ॥

तन्तोव्विष्ष्याम्म्यायुंषोनमद्ध्यादथैतम्पितुमंद्धिप्प्रसूंतः ॥ नमो

भूत्त्यैयेदञ्चकारं ॥ ६५ ॥ निवेशंनःसुङ्गमंनः ॥ निवेशंनः ॥ ११७ ॥

१ विष्ष्यामि अत्र विस्यामि इति पदम्। अत्र वेर्युदयः (शु. य. प्रा. ३ अ. ६७ सू.) इत्यनेन वेः उपसर्गात्परस्य यकारोदयस्य सकारस्य षकारे कृते स्वरात्संयोगादिर्द्विरुच्यते (शु. य. प्रा. ४ अ. १०० सू.) इत्यनेन षकारस्य द्विर्त्वे रूपम्।

सुङ्गमेनोव्वसूनांव्विश्श्वांरूपाभिचेष्टेशचीभिः ॥ देवऽइवसविता
सत्त्यधर्म्मेन्द्रोनतस्त्थौसमरेपर्थीनाम् ॥ ६६ ॥ सीरांयुञ्जन्ति ।
कवयोयुगाव्वितंन्वतेपृथक् ॥ धीरादेवेषुसुम्नया ॥ ६७ ॥
युनक्तसीरा ॥ युनक्तसीराव्वियुगातनुध्वङ्कृतेयोनौव्वपतेहबी
जम् ॥ गिराचश्श्रुष्टिःसभराऽअसन्नोनेदीयऽइत्सृण्ण्यः पक्कमे
यात् ॥ ६८ ॥ शुनꣳसु । फालाव्विकृषन्तुभूमिꣳशुनङ्कीना
शाऽअभियन्तुव्वाहैः ॥ शुनासीराहविषातोशमानासुपिप्पला

ऽओषधीः कर्त्तनास्म्मे ॥ ६९ ॥ घृतेनसीता ॥ घृतेनसीतामधुं
नासमं ज्यताविश्वैर्देवैरनुमतामरुद्भिः ॥ ऊर्ज्जस्वतीपयंसापि
न्वमानास्म्मान्त्सीतेपयंसाभ्याववृत्स्व ॥ ७० ॥ लाङ्गंल
म्पवीरवत् ॥ लाङ्गंलम्पवीरवत्सुशेवं सोमपित्सरु ॥ तदुद्वंप
तिगामविम्प्रफर्व्यञ्चपीवरीम्प्रस्त्थावद्रथवाहंणम् ॥ ७१ ॥
कामङ्कामदुघे । धुक्ष्वमित्राय वरुणायच ॥ इन्द्रायाश्विभ्यां
म्पूष्णेप्प्रजाभ्यऽओषधीभ्यः ॥ ७२ ॥ विमुच्यद्ध्वम् ॥

व्विमुंञ्च्यद्ध्वमग्घ्न्याद्देवयानाऽअगंन्म[1]तमसंस्प्पारमस्य ॥ ज्ज्यो
तिरापाम ॥ ७३ ॥ सजूरब्दं÷ ॥ सजूरब्दोऽअयंवोभिःसजू
रुषाऽअरुणीभिः ॥ सजोषंसावश्विनादंᳬसोभिःसजूःसूरऽ
एतंशेनसजूर्व्वैश्वानरऽइडंयाघृतेनस्वाहा ॥ ७४ ॥ [ १३-५ ]
याऽओषधीः ॥ याऽओषधीःपूर्व्वाजातादेवेब्भ्यंस्त्रियुगम्पुरा ॥
मनैनुबभ्रूणामहᳬशतन्धामानिसप्तचं ॥ ७५ ॥ शतंवं÷ ॥

---

१ तमसस्पारम् । अत्र तमसोऽपरस्मात् ( शु. य. प्रा. ३ अ. २६ सू. ) इत्यनेन विसर्जनीयः सकारमापद्यतेऽपरस्ताच्छब्दे परे । इति तमस इत्यस्य विसर्गस्य सकारे कृते तमसस्पारम् । अन्यथा तमसः पारम् इति स्यात् । अपरस्तात्किम् । आदित्यवर्णन्तमसः परस्तात् ( संहिता अ. ३१ मं. १८ )

शतंवो[1]ऽअम्बधामानिसहस्रमुतवोरुहः ॥ अधाशतक्क्रत्वोयु
यमिमम्मेऽअगदङ्कृत ॥ ७६ ॥ ओषधीःप्प्रति । मोदद्ध्वम्पु
ष्प्पवतीःप्प्रसूवरीः ॥ अश्वाऽइवसजित्त्वरीर्व्वीरुधःपारयि
ष्णवः ॥ ७७ ॥ ओषधीरिति । मातरस्तद्वोदेवीरुपब्रुवे ॥
सनेयमश्वङ्गाँव्वासऽआत्मानन्तवपूरुष ॥ ७८ ॥ अश्वत्थे
वः ॥ अश्वत्थेवोनिषदनम्पर्णेवोव्वसतिष्[2]कृता ॥ गोभाजऽइ



१ त्वदर्थवाचिनौ वो वां वा वै यदि निपातजौ । आदेशाश्चं विकल्पार्थां ईषत्स्पृष्टास्तु ते स्मृताः । अर्थांदेते लघव उच्चारणीयाः (या. शि.) २ वसतिः कृता इति पदम् । आविनिरिडइडायावसतिर्वैरिवः (शु. य. प्रा. ३ अ. २३ सू.) इत्यनेन ककारपकारयोः परयोरेतेषां सस्य षत्वम् । तेन वसतिष्कृता ।

त्किलासथयत्त्सनवंथपूरुषम् ॥ ७९ ॥ यत्रौषधीः । सम
ग्ग्मंतुराजानःसमिताविव ॥ विप्प्रःसऽउच्च्यतेभिषग्ग्रक्षोहा
मीवचातनः ॥ ८० ॥ अश्श्वावतीᳬंसोमावतीम् ॥ अश्श्वाव
तीᳬंसोमावतीमूर्ज्जयन्तीमुदोजसम् ॥ आवित्त्सिसर्व्वाऽओष
धीरस्म्माऽअरिष्टतातये ॥ ८१ ॥ उच्छुष्म्माः ॥ उच्छुष्म्माऽ
ओषधीनाङ्गावोगोष्ठादिवेरते ॥ धनᳬंसनिष्ष्यन्तीनामात्क्मा

१ अश्ववतीम् । इति पदम् । अत्र अश्वरश्मिसुमति० (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वकारे परे अश्वशब्दस्य ह्रस्वाकारस्य दीर्घाकारः । तेन अश्वावतीम् । एवं सोमावतीं रश्मीवतीम् ।

न्नन्तवंपूरुष ॥ ८२ ॥ इष्कृंतिर्न्नाम । वोमाताथौंसुयंस्त्थुनि
ष्कृंतीहं ॥ सीराःपंतत्रिणींस्त्थनुसदामयंतिनिष्कृंथ ॥ ८३ ॥
अतिविश्श्वाः । परिष्ठास्त्तेनऽइंवब्रजमंक्क्रमुः ॥ ओषंधीहंप्प्रा
चुंच्च्यवुर्य्यत्किञ्चंतन्न्वोरपंः ॥ ८४ ॥ यदिमाः ॥ यदिमाव्वा
जयंन्नहमोषंधीर्हस्त्तंऽआदुधे ॥ आत्क्मायक्ष्मंस्यनश्श्यतिपु
राजीवगृभोंयथा ॥ ८५ ॥ यस्यौषधीः । प्प्रसर्प्पथाङ्गंमङ्ग
म्परुंष्प्परुः ॥ ततोयक्ष्मंव्विबांधद्ध्वऽउग्ग्रोमंद्ध्यमुशीरिव ॥८६॥

साकँय्यक्ष्म ॥ साकँय्यक्ष्मप्प्रपतचाषेणकिकिदीविना ॥ सा
कंव्वातस्यध्ध्राज्यासाकन्नश्श्यनिहाकया ॥ ८७ ॥ अन्न्यावः ॥
अन्न्यावोऽअन्न्याम्मवत्त्वन्न्यान्न्यस्याऽउपावत ॥ ताः सर्व्वाः सं
विदानाऽइदम्मेप्प्रावताव्वचः ॥ ८८ ॥ याः फलिनीः ॥ याः
फलिनीर्य्याऽअफलाऽअपुष्प्पायाश्च पुष्प्पिणीः ॥ बृहस्प्पति
प्प्रसूतास्त्तानोमुञ्चन्त्वंहसः ॥ ८९ ॥ मुञ्चन्तुमा । शप

---

१ इदम्मेप्प्रावताव्वचः । अत्र अश्वरश्मिमतिसुमतिश्वसुतचारयघृणिसेदिमेन्द्रियधारयचित्रभङ्गुरवयुनाश्वस्यहृदयघुष्यत्तांभ्यवतांध्यर्चशक्तिपुरुशचि वकारे (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वचः इत्यस्य वकारे परे अवत इत्यस्य ह्रस्वाकारस्य दीर्घाकारः ।

त्थ्युदथोव्वरुण्ण्यादुत ॥ अथोयमस्यपड्वींशात्त्सर्व्वस्म्मादेवकि
ल्बिषात् ॥ ९० ॥ अवपतन्तीरवदन् ॥ अवपतन्तीरवदन्दि
वऽओषधयस्प्परि ॥ यञ्जीवमश्श्नवामहैनसरिष्ष्यातिपूरुषꣳ[1]
॥ ९१ ॥ याऽओषधीꣳ ॥ याऽओषधीꣳसोमराज्ञीर्ब्बह्वीश्शत
विचक्षणाꣳ ॥ तासामसित्त्वमुत्तमारङ्कामायशꣳहृदे ॥ ९२ ॥
याऽओषधीꣳ ॥ याऽओषधीꣳसोमराज्ञीर्व्विष्ठिताꣳपृथिवीमनु ॥

---

१ पूरुषः । अत्र पुरुषोऽवसाने (शु. य. प्रा. ३ अ. १२० सू.) पुरुष इति दीर्घो निपात्यते अवसाने चेत् । अत्र पू इत्यस्य निपातनाद्दीर्घः । अनवसाने पुरुषऽएवेदम् । अत्र ह्रस्व एव ।

बृहस्पतिप्प्रसूताऽअस्यैसन्दत्तव्वीर्य्यम् ॥ ९३ ॥ याश्च ॥
याश्चेदमुपशृण्ण्वन्तियाश्चदूरम्परागताः ॥ सर्व्वाःसङ्गत्त्यवी
रुधोस्यैसन्दत्तव्वीर्य्यम् ॥ ९४ ॥ मावः ॥ मावोरिषत्त्खनि
तायस्म्मैचाहङ्खनामिवः ॥ द्विपाच्चतुष्प्पादस्म्माकह्सर्व्वम
स्त्त्वनातुरम् ॥ ९५ ॥ ओषधयःसम् ॥ ओषधयःसम्वद
न्तसोमेनसहराज्ञा ॥ यस्म्मैकृणोतिब्राह्मणस्त्तह्राजन्पार
यामसि ॥ ९६ ॥ नाशयित्त्रीबलासस्य ॥ नाशयित्त्रीबलास

स्यार्शसऽउपचितामसि ॥ अथोशतस्यसक्ष्माणाम्पाकारोरसि
नाशनी ॥ ९७ ॥ त्वाङ्गन्धर्वाः ॥ त्वाङ्गन्धर्वाऽअखनँस्त्वा
मिन्द्रस्त्वाम्बृहस्पतिः ॥ त्वामौषधेसोमोराजाविद्वान्य
क्ष्मादमुच्यत ॥ ९८ ॥ सहस्वमे ॥ सहस्वमेऽअरातीः सहस्व
पृतनायतः ॥ सहस्वसर्व्वंपाप्मानꣳसहमानास्योषधे ॥ ९९ ॥
दीर्घायुस्त्ते ॥ दीर्घायुस्त्तऽओषधेखनितायस्मैचत्त्वाखना
म्म्यहम् ॥ अथोत्त्वन्दीर्घायुर्भूत्त्वाशतवल्शाविरोहतात्

१ अत्र लकारशकारयोर्योगे हरितारख्या स्वरभक्तिर्बोध्या ।

॥ १०० ॥ त्वमुत्तमा । स्योषधेतवंवृक्षाऽउपस्त्तयं ॥ उप
स्त्तिरस्त्तुसोस्म्माकँऽस्योऽअस्म्माँ२॥ऽअभिदासति ॥ १०१ ॥
[२७-६] मामा ॥ मामाहिꣳसीज्जनिताय*पृथिव्यासोवा
दिवꣳसत्त्यधर्म्माव्यानट् ॥ यश्चापश्चन्द्रा*प्रथमोजजानक
स्म्मैदेवायहविषाविधेम ॥ १०२ ॥ अभ्यावर्त्तस्व । पृथि
विय्ज्ञेनपयसासह ॥ वपान्तेऽअग्निरिषितोऽअरोहत् ॥१०३॥
अग्नेयत् ॥ अग्नेयत्तेशुक्रँऽयच्चन्द्रँऽयत्त्पूतँऽयच्चय्ज्ञियम् ॥

शु. य. संहि. पू. अ.

॥१२३॥ तद्देवेभ्यो भरामसि ॥ १०४ ॥ इषमूर्ज्जम् ॥ इषमूर्ज्जमहमि ॥ १२ ॥
तऽआदमृतस्य योनिम्महिषस्य धाराम् ॥ आमागोषु विशत्वा
तनूषु जहामि सेदिमानिराममीवाम् ॥ १०५ ॥ अग्नेतव ॥
अग्नेतव श्रवो वयो महि भ्राजन्ते ऽअर्च्चयो विभावसो ॥ बृह
द्भानो शवसा वाजमुक्थ्यन्दधासि दाशुषे कवे ॥ १०६ ॥
पावकवर्च्चाः शुक्रवर्च्चाः ॥ पावकवर्च्चाः शुक्रवर्च्चा ऽअनूनवर्च्चा ऽ ॥ १२३ ॥
उदियर्षि भानुना ॥ पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसीऽ

उभे ॥ १०७ ॥ ऊर्ज्जोनपात् ॥ ऊर्ज्जोनपाज्जातवेदᳫँसुश
स्तिभिर्म्मन्दस्वधीतिभिर्हितः ॥ त्वेऽइषᳫँसन्दधुर्भूरिवर्प्प
सश्चित्रोतयोव्वामजाताः ॥ १०८ ॥ इरज्ज्यन्नग्ने । प्प्रथय
स्वजन्तुभिरस्म्मेरायोऽअमर्त्त्य ॥ सदर्शतस्यव्वपुषोव्विराज
सिपृणक्षिसानसिङ्क्रतुम् ॥ १०९ ॥ इष्क्कर्त्तारमध्वरस्य ॥
इष्क्कर्त्तारमध्वरस्यप्प्रचेतसङ्क्षयन्तᳫँराधसोमहः ॥ रातिंव्वामस्य

---

१ निश्चयेन कर्तारम् निष्कर्तारमिति प्राप्ते निशब्दो बहुलम् (शु. य. प्रा. ३ अ. १८ सू.) इत्यनेन क्वचिन्नकारमात्रस्य लोपे इष्कर्तारम् ।

सुभगाम्महीमिषन्दधासिसानसिꣳरयिम् ॥ ११० ॥ [1]ऋतावा
नम्महिषं। विश्वदर्शतमग्निꣳसुम्नायंदधिरेपुरोजनाः॥ श्रुत्क
र्णꣳसप्रथस्तमन्त्वागिरादैव्यम्मानुषायुगा ॥ १११ ॥ आ
प्यायस्व ॥ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ॥ [2]भवा
वाजस्यसङ्गथे ॥ ११२ ॥ सन्ते ॥ सन्तेपयाꣳसिसमुयन्तु
वाजाःसंवृष्ण्यान्यभिमातिषाहः ॥ आप्यायमानोऽअमृ



---

१ ऋतावानम् । अत्र अश्वरश्मि० (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वकारे परे ऋतशब्दस्य ह्स्वाकारस्य दीर्घाकारः । २ भवव्वाजस्य इति पदम् । अत्र वाजस्य परे भव इत्यस्य ह्स्वाकारस्य स चावरूथ्यंवाजस्य पायुषु च (शु. य. प्रा. ३ अ. ११० सू.) इत्यनेन दीर्घे भवाव्वाजस्य । तथैव भवापायुर्व्विशोऽअस्याऽअदब्धः ।

तांयसोमदिुविश्श्रवां्ँस्युत्तमानिंधिष्ष्व ॥ ११३ ॥ आप्प्यांय
स्व । मदिन्तमुसोमुव्विश्श्वेंभिरह्वंशुभिं÷ ॥ भंवांनःसुप्प्रथंस्त्त
मुःसखांव्वृधे ॥ ११४ ॥ आतें । व्वृत्तसोमनोंयमत्त्परमाच्चिं
त्त्सुधस्त्थांत् ॥ अग्ग्नेत्त्वाङ्कांमयागिुरा ॥ ११५ ॥ तुब्भ्यु
न्ताः ॥ तुब्भ्युन्ताऽअङ्गिरस्त्तमुव्विश्श्वाः÷सुक्षिुतयःप्पृथंक् ॥
अग्ग्नेकामांययेमिरे ॥ ११६ ॥ अुग्ग्निःप्प्रियेषु ॥ अुग्ग्निः

---

१ भवनः इति पदम्। भव इत्येतस्य ह्रस्वाकारस्य नः परे भव च (शु. य. प्रा. ३ अ. १०९ सू.) इत्यनेन दीर्घाकारे कृते भवानः इति पदम्।

प्प्रियेषुधामंसुकामोंभूतस्यभव्यंस्य ॥ सुम्म्राडेकोव्विराजति
॥ ११७ ॥ [ १६-७ ] इतिश्रीवाजसनेयसंहितायांद्वादशोऽ
ध्यायः ॥ १२ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥
मयिगृह्णामिपंचदश, ध्रुवास्येकादश, मधुव्वाताऽएकादश,
सम्यक्स्त्रवंतिनवे, मंमाषड, पांत्वैका, ऽयंपुरःपंच, सप्ताष्टापंचा
शत् [ अनु. ७ मं. । . १३ ॥ हरिःॐ ॥ मयि
गृह्णामि ॥ मयिगृह्णाम्म्यग्ग्रेऽअग्निᳫ रायस्प्पोषायसुप्प्रजा

स्त्वायंसुवीऽर्यीय ॥ मामुद्देवताः॑सचन्ताम् ॥ १ ॥ अपाम्पृ
ष्ठम् ॥ अपाम्पृष्ठमसियोनिरग्नेः॒सुमुद्रमुभितः॑पिन्वमानम् ॥
वर्द्धमानोमुहाँ२॥ऽआचपुष्करेदिवोमात्रयावरिम्णाप्प्रथस्व
॥ २ ॥ ब्रह्मयज्ञानम् ॥ ब्रह्मयज्ञानम्प्रथमम्पुरस्त्ताद्विसी
मतः॒सुरुचोवेनऽआवः॑ ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाः॒सुत
श्चयोनिमसतश्चविवः॑ ॥ ३ ॥ हिरण्यगर्भः॒सम् ॥ हिरण्य
गर्भः॒समवर्त्तताग्रेभूतस्यजातः॒पतिरेकऽआसीत् ॥ सदाधार

पृथिवीन्द्यामुतेमाङ्कस्म्मैदेवायहविषाविधेम ॥ ४ ॥ द्रप्स
श्चस्कन्द । पृथिवीमनुद्यामिमञ्चयोनिमनुयश्चपूर्व्वः ॥ समा
नँय्योनिमनुसञ्चरन्तन्द्रप्सञ्जुहोम्म्यनुसप्तहोत्राः ॥ ५ ॥
नमोस्तु । सर्प्पेब्भ्योयेकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदि
वितेब्भ्यः सर्प्पेब्भ्योनमः ॥ ६ ॥ याऽइषवः ॥ याऽइषवो
यातुधानानाँय्येवावनस्प्पतीँ १॥रनु ॥ येवावटेषुशेरतेतेब्भ्यः
सर्प्पेब्भ्योनमः ॥ ७ ॥ येवा ॥ येवामीरोचनेदिवोयेवा

सूर्य्यस्यरश्मिम्मषुं ॥ येषामप्सुसद[1]स्कृतन्तेभ्यः सर्प्पेभ्योन
मः ॥ ८ ॥ कृणुष्ष्वपाजः ॥ कृणुष्ष्वपाजꣳ प्प्रसितिन्नपृथ्वीँ
ऽयाहिराजेवामवाँ२॥ऽइभेन ॥ तृष्ष्वीमनुप्प्रसितिन्द्रूणानो
स्त्तासिव्विद्ध्यरक्षसस्त्तपिष्ठैः ॥ ९ ॥ तवभ्र्रमासः ॥ तवभ्र्र
मासऽआशुयापतन्त्यनुस्प्पृशधृषताशोशुचानः ॥ तपूꣳष्ष्य

---

१ सदस्कृतम् । अत्र सदोद्यौर्नमस्कृतस्पिता पथेषु (शु. य. प्रा. ३ अ. ३४ सू.) इत्यनेन यथासंख्यं सदः द्यौः नमः एतेषां विसर्जनीयसंबन्धिनः सस्य क्रमेण कृतं पिता पथः एतेषु पदेषु परेषु षकारः। एवं षकारे कृते ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन ककारस्य द्वित्वे प्राप्ते ऋवर्णे (शु. य. प्रा. ४ अ. १११ सू.) इत्यनेन ककारस्य द्वित्वनिषेधः ।

ग्ग्नेजुह्वापतङ्ग्ज्ञानसान्दितोव्विसृंजुव्विष्ष्वंगुल्काः ॥ १० ॥ प्रति ॥ पू. अ. ॥ १३ ॥
स्प्पशं ॥ प्रतिस्प्पशोव्विसृंजतूर्णितमोभवापायुर्व्विशोऽअ
स्याऽअदंब्धः ॥ योनोदूरेऽअघशं ᳪ सोयोऽअन्त्यग्ग्नेमाकिष्ट्टे
र्व्यथिरादंधर्षीत् ॥ ११ ॥ उदग्ग्ने । तिष्ट्ठप्प्रत्त्यातनुष्व्वन्न्य
मित्राँ२॥ऽओषतात्तिग्ग्मह्हेते ॥ योनोऽअराति ᳪ समिधानच
क्रेनीचातन्धक्क्ष्यतसन्नशुष्क्कम् ॥ १२॥ ऊर्द्ध्वोभव ॥ ऊर्द्ध्वोभव ॥ १२७ ॥
प्प्रतिव्विद्ध्याद्ध्यस्म्मदाविष्क्कृणुष्व्वदैव्व्यान्न्यग्ग्ने ॥ अवस्थिरा

१ माकिष्टे । अत्र वृन्दारुर्माकिः (शु. य. प्रा. ३ अ. ७४ सू.) इत्यनेन विसर्गस्य सस्य षत्वे द्वित्वे रूपम् ।

तंनुहियातुजूनांञ्जामिमजांमिम्प्रमृंणीहिशत्रूंन् ॥ अग्नेष्ट्वा
तेजंसासादयामि ॥ १३ ॥ अग्निर्म्मूर्द्धा । दिवः ककुत्पतिंः
पृथिव्याऽअयम् ॥ अपाᳬरेताᳬसिजिन्वति ॥ इन्द्रंस्यत्त्वौज
सासादयामि ॥ १४ ॥ भुवोयज्ञस्य ॥ भुवोयज्ञस्यरजंसश्चने
तायत्रानियुद्भिःसचंसेशिवाभिः ॥ दिविमूर्द्धानंन्दधिषेस्वर्षा
ञ्जिह्वामंग्नेचकृषेहव्यवाहंम् ॥ १५ ॥ [ १५-१ ] ध्रुवासिं ।
धरुणास्तृंताविश्वकंर्म्मणा ॥ मात्त्वांसमुद्रऽउद्वंधीन्मासुप

पर्णोऽव्यथमानापृथिवीन्दृꣳह ॥ १६ ॥ प्रजापतिष्ट्वा । साद
यत्त्वपाम्पृष्ठेसमुद्रस्येमन् ॥ व्यचस्वतीम्प्रथस्वतीम्प्रथस्वपृथि
व्यसि ॥ १७ ॥ भूरसि ॥ भूरसिभूमिरस्यदितिरसिविश्वधाया
विश्वस्यभुवनस्यधर्त्री ॥ पृथिवीँय्यच्छपृथिवीन्दृꣳहपृथिवी
म्माहिꣳसीः ॥ १८ ॥ विश्वस्मैप्प्राणाय ॥ विश्वस्मैप्प्रा
णायापानायव्यानायोदानायप्प्रतिष्ठायैचरित्राय ॥ अग्निष्ट्वा ॥ १२८ ॥

१ प्रजापतिष्ट्वा । सकारपरे च (शु. य. प्रा. ३ अ. ७८ सू.) इत्यनेन सकारः परो यस्मादेकाक्षरात्तस्यैकाक्षरे प्रत्यये विसर्जनीयसकारस्य षत्वम् । अत्र प्रजापतिशब्दे पाधातोः पतिशब्दस्य सस्य षकारे ष्टुत्वे द्वित्वे रूपम् ।

भिपातुमह्यास्वस्त्याच्छर्द्दिषाशान्तम्मेनतयादेवतयाङ्गिरस्वद्ध्रु
वासीद ॥ १९ ॥ काण्डात्काण्डात्प्ररोहन्ती ॥ काण्डा
त्काण्डात्प्ररोहन्तीपरुषः[1]परुषस्प्परि ॥ एवानोदूर्व्वेप्प्रतनुस
हस्रेणशतेनच ॥ २० ॥ याशतेन । प्प्रतनोषिसहस्रेणव्विरो
हसि ॥ तस्यास्तेदेवीष्टकेव्विधेमहविषाव्वयम् ॥ २१ ॥ यास्ते ॥
यास्तेऽअग्नेसूर्य्येरुचोदिवमातन्वन्तिरश्मिभिः ॥ ताभि

---

१ परुषः परुषस्प्परि । अत्र समानपदे च ( शु. य. प्रा. ३ अ. ३० सू. ) इत्यनेन सकारे प्राप्ते न परुषः परुषि ( शु. य. प्रा. ३ अ. ३७ सू. ) इत्यनेन परुषि परे पूर्वपरुषशब्दघटितविसर्जनीयस्य सकारो निषिध्यते । अतो न सकारः किन्तु विसर्ग एव ।

 न्नोँऽअद्यसर्व्वाँभीरुचेजनायनस्कृधि ॥ २२ ॥ सावं॑ ॥ सा 
॥१२९॥ वोँदेवाः सूर्य्येरुचोगोष्वश्वेषुसारुचं॑ ॥ इन्द्राग्नीताभिः स ॥ १३
र्व्वाँभीरुचन्नोधत्तबृहस्पते ॥ २३ ॥ विराड्ज्योति॑ ॥ वि
राड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयत् ॥ प्रजापतिष्ट्वासा
दयतुपृष्ठेपृथिव्याज्योतिष्मतीम् ॥ विश्वस्मैप्राणायापाना
यव्यानायविश्वञ्ज्योतिर्य्यच्छ ॥ [1]अग्निष्टेधिपतिस्तयादेवत ॥१२९॥

१ अग्निष्टे । अग्निस्ते इति पदम् । अत्र वायुरग्निरग्नेरेकाक्षरे (शु. य. प्रा. ३ अ. ७७ सू.) इत्यनेन एकाक्षरे ते पदे परे अग्निशब्दघटितस्य सस्य षत्वे ष्टुत्वे ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन टस्य द्वित्वम् ।

याङ्गिरस्वद्ध्रुवासीद ॥ २४ ॥ मधुश्च ॥ मधुश्चमाधवश्चवास
न्तिकावृतूऽअग्नेरन्तःश्लेषोसिकल्पेतान्द्यावापृथिवीकल्प
न्तामापऽओषधयःकल्पन्तामग्नयः पृथङ्ममज्ज्यैष्ठ्यायस
व्रताः ॥ येऽअग्नयःसमनसोन्तराद्यावापृथिवीऽइमे ॥ वास
न्तिकावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंविशन्तु[1]
तयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ २५ ॥ अषाढासि ॥ अषा

---

१ अभिसंविशन्तु । अत्र भाविभ्यः सः षं समानपदे (शु. य. प्रा. ३ अ. ५६ सू.) अनेन प्राप्तस्य षकारस्य अनुसन्तनोतुबृहस्पतिसुतस्यसुसमिद्धाय-सुसन्दृशमभिसत्वाऽभिसंविशन्तु० (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन प्रकृतिभावे षत्वाभावः ।

ढासिसहंमानासहुस्वारांतीॆंसहंस्वपृतनायतः ॥ सुहस्त्रंवीर्य्या
सिसामांजिन्व ॥ २६ ॥ [ ११-२ ] मधुव्वातांॆं ॥ मधुव्वाताऽऋ
तायुतेमधुंक्षरन्तिसिन्धंवंॆं ॥ माद्धीर्न्नंसन्त्वोषंधीॆं ॥ २७ ॥
मधुनक्तम् ॥ मधुनक्तंमुतोषसोमधुंमत्पार्थिवॆंरजंः ॥ म
धुद्यौरंस्तुनॆंपिता ॥ २८ ॥ मधुंमान्नॆं ॥ मधुंमान्नोव्वनस्पति
र्म्मधुंमाँ२॥ऽअस्तुसूर्य्यंः ॥ माद्ध्वीर्ग्गावोंभवन्तुनॆं ॥ २९ ॥ ॥ १३० ॥
अपाङ्गम्भंन् ॥ अपाङ्गम्भंन्त्सीदुमात्वासूर्य्योंभितांप्प्सीन्मा

ग्निर्वैश्वानुरः ॥ अच्छिन्नपत्राःप्प्रजाऽअंनुवीक्षस्वानुंत्त्वादि
व्याव्वृष्टिः सचताम् ॥ ३० ॥ त्रीन्त्समुद्द्रान् ॥ त्रीन्त्समुद्द्रा
न्त्समसृपत्त्स्वुर्ग्गानुपाम्पतिर्व्वृषुभऽइष्टकानाम् ॥ पुरीषंव्वसानः
सुकृतस्यंलोकेतत्रंगच्छयत्रपूर्वेपरेताः ॥ ३१ ॥ महीद्यौः ।
पृथिवीचंनऽइमँय्युज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरीमभिः
॥ ३२ ॥ व्विष्णोःकर्म्माणि । पश्श्यतयतोव्व्रतानिपस्प्पुशे ॥
इन्द्रस्ययुज्ज्यःसखा ॥ ३३ ॥ ध्रुवासि । धुरुणेतोजज्ञेप्रथम

 

मेभ्योसोनिभ्योऽअधिजातवेदाः ॥ सगायत्र्यात्रिष्टुभानुष्टु
भांचदेवेभ्योहव्यंवहतुप्रजानन् ॥ ३४ ॥ इषेराये । रंस
स्वसहसेद्युम्नऽऊर्ज्जेऽअपत्त्याय ॥ सम्म्राडसिस्वराडसिसार
स्वतौत्त्वोत्त्सौप्प्रावताम् ॥३५॥ अग्नेयुक्ष्व ॥ अग्नेयुक्ष्वाहि
येतवाश्श्वासोदेवसाधवः ॥ अरंवहन्तिमन्यवे ॥ ३६ ॥
युक्ष्वाहि । देवहूतमाँ२॥ऽअश्श्वाँ२॥ऽअग्नेरथीरिव ॥ निहोता ॥ १२१
पूर्व्यःसदः ॥ ३७ ॥ [११-३] सम्म्यक्स्स्रवन्ति । सरितो

नधेनाऽअन्तर्हृदामनंसापूयमानाः ॥ घृतस्यधाराऽअभिचांक
शीमिहिरण्ययोव्वेतसोमद्ध्यैऽअग्नेः ॥ ३८ ॥ ऋचेत्त्वा ।
रुचेत्त्वांभासेत्त्वाज्ज्योतिषेत्त्वा ॥ अभूदिदंव्विश्श्वस्यभुवनस्य
व्वाजिनमग्नेर्व्वैश्श्वानरस्यंच ॥ ३९ ॥ अग्निज्ज्योतिषा ॥
अग्निज्ज्योतिषाज्ज्योतिष्म्मान्रुक्म्मोव्वर्च्चसाव्वर्च्चस्वान् ॥ सहस्र
दाऽअसिसहस्रायत्त्वा ॥ ४० ॥ आदित्त्यङ्गर्ब्भम् ॥ आदित्त्य

---

१ यत्र रकारपरस्य हकारपरस्य च स्पर्शवर्णस्य द्वित्वं तत्र ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन ज्ञेयम्। अस्य परं तु रेफहकाराभ्याम् इत्यनेन विधीयमानस्य द्वित्वस्यापवादभूतत्वात्। यथा संवर्च्चसा। गर्ब्भम्। पार्त्थिवम्। चक्षुर्म्मित्रस्य। अग्निर्ज्ज्योतिषा।

ङ्गर्भम्पयसा समङ्क्षि सहस्रस्य प्रतिमां विश्वरूपम् ॥ परिवृङ्धि
हरसा माभि मंस्थाः[1] शतायुषङ्कृणुहि चीयमानः ॥४१॥ वातस्य
जूतिं । वरुणस्य नाभिमश्वञ्जज्ञानं[2] सरिरस्य मद्ध्ये ॥ शिशुं
नदीनां[3] हरिमद्रिबुद्ध्नमग्ने मा हिंसीः परमे व्योमन् ॥४२॥
अजस्रमिन्दुम् ॥ अजस्रमिन्दुमरुषम्भुरण्युमग्निमीडे

१ मंस्थाः । अत्र संयोगाद्यश्च यो भवेत् । ( या. शि. ) यत्र संयोगाद्योऽनुस्वारो मात्रिको द्विमात्रिको वा वर्णो भवेत्तत्र ऋवर्णव्यञ्जनादिगं संयोगाद्यं वर्जयित्वा ह्रस्व एव बोध्यः । संयोगात्पूर्वः संयोगपूर्वः इति समासः । अत्र नानुस्वारः ( शु. य. प्रा. ४ अ. १०९ सू. ) लिङ्गम् । २ वर्णे तु मात्रिके पूर्वे ह्यनुस्वारो द्विमात्रिकः । ( या. शि. ) मात्रिकेऽ ( ह्रस्ववर्ण पूर्वे ) नुस्वारे सो द्विमात्रिको लेख्यो बोध्य उच्चारणीयश्च । अत्र अनुस्वारो ह्रस्वपूर्वोऽध्यर्धमात्रा पूर्वा चार्धमात्रेति ( शु. य. प्रा. ४ अ. १४८ सू. ) प्रमाणम् । ३ द्विमात्रिके मात्रिकः स्यादिति ( या. शि. ) । यत्रानुस्वारात्पूर्ववर्णो द्विमात्रिकस्तत्र मात्रिकोऽ ( ह्रस्वः ७इत्याकारकः ) नुस्वारो विधेयो ह्रस्वोच्चारणीयश्च । अत्र दीर्घादर्द्धमात्रा पूर्वा चाध्यर्धा ( शु. य. प्रा. ४ अ. १४९ सू. ) लिङ्गम् । ॥१३२॥

पूर्व्वचित्तिन्नमोभिः ॥ सपर्व्वीभिर्कृतुशंकल्प्यमानोगाम्माहिंᳫसीरदितिंव्विराजंम् ॥ ४३ ॥ व्वरूत्रीन्त्वष्टुः ॥ व्वरूत्रीन्त्वष्टुर्व्वरुणस्यनाभिमविञ्जज्ञानाᳫंरजसः परस्म्मात् ॥ महीᳫंसाहस्रीमसुरस्यमायामग्नेमाहिᳫंसीः परमेव्योमन् ॥ ४४ ॥ योऽअग्निः ॥ योऽअग्निरग्नेरध्यजायतशोकात्पृथिव्याऽउतवादिवस्परि ॥ येनप्प्रजाव्विश्वकर्म्माजजानतमंग्नेहेडः परितेव्वृणक्तु ॥ ४५ ॥ चित्रन्देवानाम् ॥ चित्रन्देवानामुदगाद

नीकञ्चक्षुर्म्मित्रस्यव्वरुणस्याग्ग्नेः[1] ॥ आप्प्राद्यावापृथिवीऽअन्त
रिक्षꣳसूर्य्यऽआत्मजगतस्तस्थुषश्च ॥ ४६ ॥ [ ९-४ ]
इमम्मा । हिꣳसीर्द्विपादम्पशुꣳसहस्राक्षोमेधायचीयमानः ॥
मयुम्पशुम्मेधमग्ग्नेजुषस्वतेनचिव्वानस्तन्व्वोनिषीद ॥ मयु
न्तेशुगृच्छतुयन्द्विष्मस्तन्तेशुगृच्छतु ॥ ४७ ॥ इमम्मा ।
हिꣳसीरेकशफम्पशुङ्कनिक्रदंव्वाजिनंव्वाजिनेषु ॥ गौरमार



१ यत्र स्वरात्परस्य संयोगस्याद्यक्षरस्य द्वित्वं दृश्यते तत्र स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र (शु य. प्रा. ३ अ. ९६ सू.) इत्यनेन ज्ञेयम् । चिव्वानः । संव्व्यच्यमानः । जनित्रम् । वरुणस्याग्ग्नेः । परञ्च स संयोगः सजातीयकंठ्यतालव्यदन्त्यमूर्धन्यौष्ठ्यवर्णानां न चेत् तत्र तु द्वित्वाभाव एव यथा इमम्मा । गौरन्ते ।

ण्यमनुंतेदिशामितेनंचिन्वानस्तन्वोनिषींद ॥ गौरन्तेशुगृं

च्छतुयन्द्विष्मस्तन्तेशुगृंच्छतु ॥ ४८ ॥ इमꣳसाहस्रम् ॥

इमꣳसाहस्रꣳशतधारमुत्सं॑व्यच्यमानꣳसरिरस्यमद्ध्ये ॥

घृतन्दुहानामदितिञ्जनायाग्नेमाहिꣳसीःपरमेव्योमन् ॥ गव

यमारण्यमनुंतेदिशामितेनंचिन्वानस्तन्वोनिषींद ॥ गवय

न्तेशुगृंच्छतुयन्द्विष्मस्तन्तेशुगृंच्छतु ॥ ४९ ॥ इममूर्णा

युं। वरुणस्यनाभिन्त्वचम्पशूनान्द्विपदाञ्चतुष्पदाम् ॥ त्वष्टुः

प्रजानांम्प्रथमञ्जनित्रमग्नेमाहिंꣳसीःपरमेव्योमन् ॥ उष्ट्रं
मारण्ण्यमनुंतेदिशामितेनंचिन्न्वानस्तन्न्वोनिषीद ॥ उष्ट्रन्ते
शुगृंच्छतुयन्द्विष्म्मस्तन्तेशुगृंच्छतु ॥ ५० ॥ अजोहि ॥ अजो
ह्यग्नेरजनिष्टशोकात्सोऽअंपश्श्यज्जनितारमग्ग्रें ॥ तेनंदेवादेव
तामग्ग्रंमायँस्तेनरोहंमायन्नुपमेद्ध्यासः ॥ शरभमारण्ण्यमनुंते
दिशामितेनंचिन्न्वानस्तन्न्वोनिषीद ॥ शरभन्तेशुगृंच्छतुय
न्द्विष्म्मस्तन्तेशुगृंच्छतु ॥ ५१ ॥ त्वँय्यंविष्ठ । दाशुषोनॄँः

पाहिशृणुधीगिरः ॥ रक्षातोकमुतत्क्मना ॥५२॥ [ ६-५ ]
अपान्त्वा ॥ अपान्त्वेमन्त्सादयाम्म्यपान्त्वोद्मन्त्सादयाम्म्य
पान्त्वाभस्मन्त्सादयाम्म्यपान्त्वाज्ज्योतिषिसादयाम्म्यपा
न्त्वायनेसादयाम्म्यर्णवेत्त्वासदनेसादयामिसमुद्रेत्त्वासदने
सादयामिसरिरेत्त्वासदनेसादयाम्म्यपान्त्वाक्षयेसादयाम्म्य
पान्त्वासधिषिसादयाम्म्यपान्त्वासदनेसादयाम्म्यपान्त्वासध
स्थेसादयाम्म्यपान्त्वायोनौसादयाम्म्यपान्त्वापुरीषेसादया

१ एमनि इति पदम् । निशब्दो बहुलम् (शु. य. प्रा. ३ अ. १८ सू.) इत्यनेन क्वचिन्निकारघटितेकारस्यापि लोपः । एवं लोपे एमन् भवति ।

म्म्यपान्त्वापाथंसिसादयामिगायत्रेणत्त्वाच्छन्दंसासादयामि
त्रैष्टुंभेनत्त्वाच्छन्दंसासादयामिजागंतेनत्त्वाच्छन्दंसासादया
म्म्यानुंष्टुभेनत्त्वाच्छन्दंसासादयामिपाङ्क्तेनत्त्वाच्छन्दंसासाद
यामि ॥ ५३ ॥ [ १-६ ] अयम्पुरः ॥ अयम्पुरोभुवस्तस्यं
प्प्राणोभौवायुनोव्वंसन्तः प्प्राणायनोगांयत्रीव्वांसन्तीगांयत्र्यै
गांयत्रङ्गांयत्रादुंपाꣳशुरुंपाꣳशोस्त्रिवृत्त्रिवृतोंरथन्तरंव्वसिंष्ठऽ ॥ १३५ ॥
ऋषिंः प्प्रजापंतिगृहीतयात्त्वयांप्प्राणङ्गृंह्णामिप्प्रजाब्भ्यंः

॥५४॥ अयन्दक्षिणा । विश्वकर्म्मातस्यमनोवैश्वकर्म्मणङ्ग्री
ष्म्मोमानसस्त्रिष्टुब्ग्रैष्म्मीत्रिष्टुभः स्वारंस्वारादन्तर्य्यामोन्त
र्य्यामात्पञ्चदशः पञ्चदशाद्वृहद्भरद्वाजऽऋषिः प्प्रजापतिगृही
तयात्त्वयामनोगृह्णामिप्प्रजाब्भ्यः ॥५५॥ अयम्पश्चात् ॥
अयम्पश्चाद्विश्वव्यचास्तस्यचक्षुर्वैश्वव्यचसंव्वर्षाश्चाक्षु
ष्युोजगतीव्वार्षीजगत्त्याऽऋक्कसम मृक्कसमाच्छुक्रः शुक्रात्सप्त
दशः सप्तदशाद्वैरूपञ्जमदग्निर्ऋषिः प्प्रजापतिगृहीतयात्त्वया

चक्षुर्गृह्णामिप्प्रजाब्भ्यः ॥ ५६ ॥ इदमुत्तरात् ॥ इदमुत्त
रात्त्स्वस्त्तस्यश्श्रोत्रꣳसौवꣳशरच्छ्रौत्र्यनुष्टुप्प्शारद्यनुष्टुभंऽऐ
डमैडान्म्मन्थीमन्थिनंऽएकविꣳशऽएकविꣳशाद्वैराजंविश्वामि[1]
त्रऽऋषिः प्प्रजापतिगृहीतयात्त्वयाश्श्रोत्रङ्गृह्णामिप्प्रजाब्भ्यः
॥ ५७ ॥ इयमुपरिमतिस्त्तस्यैवाङ्[2]मात्त्याहैमन्न्तोवाच्यःप
ङ्क्तिर्हैमन्तीपङ्क्क्त्यैनिधनंवन्निधनंवतऽआग्ग्रयणऽआग्ग्रयणात्त्रि



१ विश्वामित्रः । अत्र नरहामित्रेषु च (शु. य. प्रा. ३ अ. १०३ सू.) इत्यनेन मित्रशब्दपरे विश्वशब्दस्य दीर्घाकारः । २ वाक्‌मात्या इति पदम् । पञ्चमेऽपञ्चमम् । (शु. य. प्रा. ४ अ. १२१ सू.) पञ्चमे स्पर्शे प्रत्यये परेऽपञ्चमः पञ्चममापद्यते । इत्यनेन ककारस्य पञ्चमे स्वरे पञ्चमः । वाङ्मात्या ।

णवन्त्रयस्त्रिꣳशौत्रिणवन्त्रयस्त्रिꣳशाब्भ्याꣳशाक्करैवतेव्विश्वक
र्म्मऽऋषिः प्प्रजापतिगृहीतयात्त्वयाव्वाचंङ्गृह्णामिप्प्रजाब्भ्यो
लोकन्ताऽइन्द्रम् ॥ ५८ ॥ [५-७] इतिश्रीवाजसनेयसंहि
तायांत्रयोदशोऽध्यायः ॥ १३ ॥ श्रीवेदपुरुषायनमः ॥

अनुवाकसूत्रम् ॥ ध्रुवक्षितिर्षट्, सजूरृतुभिर्द्विका, मूर्द्धाव्वयो
द्विका, इन्द्राग्नीऽअव्यथमानाꣳषडा, युर्मेषडा, शुस्त्रिवृदेका,

१ अध्यायः १२-लोकंपृण. १ । ताऽअस्य. २ । इंद्रंविश्वाः. ३ ॥ इति प्रतीकानि ॥
५४ ५५ ५६

ग्नेर्भागोसिचतुष्कै,कयाचतुष्का,ष्टावेकत्रिꣳशत् [ अ. १४
मं. ३१ अनु. ८ ] ॥ हरिः ॐ ॥ ध्रुवक्षितिर्ध्रुवयोनिः ॥
ध्रुवाक्षितिर्ध्रुवयोनिर्ध्रुवासिध्रुवँय्योनिमासीदसाधुया ॥ उख्यं
स्यकेतुम्प्रथमञ्जुषाणाश्विनाध्वर्यूसादयतामिहत्त्वा ॥ १ ॥
कुलायिनीघृतवती ॥ कुलायिनीघृतवतीपुरन्धिꣳस्योनेसीदस
दनेपृथिव्याः ॥ अभित्त्वारुद्रावसवोगृणन्त्विमाब्रह्मपीपि

१ ध्रुवयोनिः ॥ अत्र समानपदे ऋषरेभ्यः स्वरयवहकपैश्च (शु. य. प्रा. ३ अ. ६२ सू.) इत्यनेन णत्वप्राप्तौ इन्द्राग्नी चित्रभानो० (य. शु. प्रा. ३ अ. ९३ सू.) इत्यनेन णत्वनिषेधः ।

हि॒सौभ॑गाया॒श्विना॑द्ध्व॒र्य्यू सा॑दयता॒मि॒ह त्त्वा॑ ॥ २॥ स्वै॒र्द॑क्ष्षैः ॥
स्वै॒र्द॑क्ष्षै॒र्द॑क्ष्षपिते॒ह सी॑द दे॒वाना॑ᳬ सु॒म्ने बृ॒ह॒ते रणा॑य ॥ पि॒तेवै॑धि
सू॒नव॒ऽआसु॒शेवा॑स्वावे॒शा त॒न्न्वा॒ सं वि॑शस्वा॒श्विना॑द्ध्व॒र्य्यू सा॑दयता
मि॒ह त्त्वा॑ ॥ ३ ॥ पृ॒थि॒व्याः पुरी॑षम् ॥ पृ॒थि॒व्याः पुरी॑षम॒स्य
प्प्सो नाम॒ तान्त्वा॒ विश्वे॑ऽअ॒भि गृ॑णन्तु दे॒वाः ॥ स्तोम॑पृष्ठा घृ॒तव॑
ती॒ह सी॑द प्र॒जाव॑द॒स्म्मे द्र॑वि॒णाय॑ जस्वा॒श्विना॑द्ध्व॒र्य्यू सा॑दयता॒मि॒
ह त्त्वा॑ ॥४॥ अदि॑त्त्यास्त्त्वा । पृ॒ष्ठे सा॑दयाम्य॒न्तरि॑क्षस्य ध॒र्त्त्रीं

विष्टम्भनीन्दिशामधिपत्नीम्भुवनानाम् ॥ ऊर्म्मिर्द्रप्सोऽ
अपामसिविश्वकर्म्मातऽऋषिरश्विनाध्वर्यूसादयतामिहत्त्वा
॥ ५ ॥ शुक्रश्च ॥ शुक्रश्चशुचिश्चग्ग्रैष्म्मावृतूऽअग्नेरन्तःश्लेषो
सिकल्प्पेतान्द्यावापृथिवीकल्प्पन्तामापऽओषधयःकल्प्पन्ता
मग्नयःपृथङ्ममज्ज्यैष्ठ्यायसव्व्रताः ॥ येऽअग्नयःसमनसो
न्तराद्यावापृथिवीऽइमे ॥ ग्रैष्म्मावृतूऽअभिकल्प्पमानाऽइन्द्र
मिवदेवाऽअभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ ६ ॥

[६-१]सजूर्ऋतुभिः। सजूर्विधाभिः सजूर्देवैः सजूर्देवैर्वयोनाधै
रग्नये त्वा वैश्वानराया श्विनाध्वर्यू सादयतामिह त्वा सजूर्ऋतु
भिः सजूर्विधाभिः सजूर्वसुभिः सजूर्देवैर्वयोनाधैरग्नये त्वा वै
श्वानराया श्विनाध्वर्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्वि
धाभिः सजूरुद्रैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानराया श्वि
नाध्वर्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्विधाभिः सजूरा
सं. २४ दित्यैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानराया श्विनाध्वर्यू सा

दयतामिहत्त्वासजूर्ऋतुभि÷सजूर्व्विधाभि÷सजूर्व्विश्श्वैर्द्देवैःस
जूर्द्देवैर्व्वयोनाधैरग्ग्नयेत्त्वाव्वैश्श्वानरायाश्श्विनाद्ध्वर्य्यूसादयतामि
हत्त्वा॥ ७॥ प्राणम्मे। पाह्यपानम्मेपाहिव्व्यानम्मेपाहिचक्षु
र्म्मऽउर्व्याव्विभाहिश्श्रोत्रम्मेश्श्लोकय॥ अपःपिन्न्वौषधीर्ज्जिन्न्व
द्विपादवचतुष्प्पात्पाहिदिवोव्वृष्टिमेरय ॥ ८ ॥ [ २-२ ] मूर्द्धा
वय÷। प्प्रजापतिश्च्छन्द÷क्षत्त्रंव्वयोमयन्दञ्छन्दोव्विष्टम्भो
वयोधिपतिश्च्छन्दोव्विश्श्वकर्म्मावय÷परमेष्ठीच्छन्दोबस्तो

व्वयोंव्विवलञ्छन्दोव्वृष्णिर्व्वयोंव्विशालञ्छन्दः पुरुषोव्वयस्त्त
न्द्रञ्छन्दोव्याग्घ्रोव्वयोनाधृष्टञ्छन्दः सिहोव्वयश्च्छदिश्च्छ
न्दः पष्ठवाड्वयोंबृहतीच्छन्दऽउक्षाव्वयः ककुप्च्छन्दऽऋषभो
व्वयः सतोबृहतीच्छन्दोनड्वान्व्वयः ॥९॥ अनड्वान्व्वयः। पङ्क्ति
श्च्छन्दोधेनुर्व्वयोजगतीच्छन्दस्त्र्यविर्व्वयस्त्रिष्टुप्च्छन्दोदित्त्य
वाड्वयोंव्विराट्छन्दः पञ्चाविर्व्वयोगायत्रीच्छन्दस्त्रिवत्त्सोव्वयऽउ
ष्णिक्छन्दस्त्तुर्य्यवाड्वयोनुष्टुप्च्छन्दोलोकन्ताऽइन्द्रम् ॥१०॥

---

१ अध्यायः १२ लोकंपृण. १ ताऽअस्य. २। इन्द्रंविश्वाः. ३ ॥ इति प्रतीकानि ॥
५४ ५५ ५६

[ २-३ ] इन्द्राग्नीऽअव्यथमानाम् ॥ इन्द्राग्नीऽअव्यं
थमानामिष्टकान्दृ꣡ᳲहतँयुवम् ॥ पृष्ठेन द्यावापृथिवीऽअन्त
रिक्षञ्चविबाधसे ॥ ११ ॥ विश्वकर्म्मात्वा । सादयत्वन्त
रिक्षस्यपृष्ठेव्यचस्वतीम्प्रथस्वतीमन्तरिक्षँयच्छान्तरिक्ष
न्दृ꣡ᳲहान्तरिक्षम्माहि꣡ᳲसीः ॥ विश्वस्म्मैप्प्राणायापानाय
व्यानायोदानायप्प्रतिष्ठायैचरित्राय ॥ वायुष्ट्वाभिपातुमह्यास्व
स्त्याच्छर्दिषाशन्तमेनतयादेवतयाङ्गिरस्वद्ध्रुवासीद ॥ १२ ॥

शतम् ॥ ७०० ॥ राज्ञ्यसि ॥ राज्ञ्यसिप्प्राचीदिग्विराडसि
दक्षिणादिक्सम्म्राडसिप्प्रतीचीदिक्स्वराडस्युदीचीदिगधिप
त्न्यसिबृहतीदिक् ॥ १३ ॥ विश्श्वकर्म्मात्त्वा । सादयत्त्व
न्तरिक्क्षस्यपृष्ठेज्ज्योतिष्म्मतीम् ॥ विश्श्वस्म्मैप्प्राणायापानाय
व्यानायविश्श्वञ्ज्योतिर्य्यच्छ ॥ वायुष्टेधिपतिस्त्तयादेवतया
ङ्गिरस्वद्ध्रुवासीद ॥ १४ ॥ नभश्श्च । नभस्यश्श्चवार्षिकावृतूऽ

---

१ वायुष्टे। अत्र वायुस्ते इति पदम्। "वायुरग्निरग्नेरेकाक्षरे" (शु. य. प्रा. ३ अ. ७७ सू.) इत्यनेन एकाक्षरे पदे परे वायुः अग्निः अग्नेः एतेषां विसर्गस्य षत्वं भवति। ततः ष्टुत्वे ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन द्वित्वे रूपम्।

अग्नेरंन्तꣳश्लेषोसिकल्प्पैंतान्द्यावांपृथिवीकल्प्पंन्तामापऽओ
॥१४१॥ षंधयꣳकल्प्पंन्तामग्नयꣳपृथङ्ममज्ज्यैष्ठ्यांयसव्व्रंताꣳ ॥ येऽ ॥ १४ ॥
अग्नयꣳसमंनसोन्तराद्यावांपृथिवीऽइमे ॥ व्वार्षिकावृतूऽअ
भिकल्प्पंमानाऽइन्द्रंमिवदेवाऽअंभिसंविंशन्तुतयांदेवतंयाङ्गि
रस्वद्ध्रुवेसींदतम् ॥ १५ ॥ इषश्च ॥ इषश्चोर्ज्जश्चंशारदा
वृतूऽअग्नेरंन्तꣳश्लेषोसिकल्प्पैंतान्द्यावांपृथिवीकल्प्पंन्तामा ॥१४१॥
पऽओषंधयꣳकल्प्पंन्तामग्नयꣳपृथङ्ममज्ज्यैष्ठ्यांयसव्व्रंताꣳ ॥

येऽअग्नयःसमनसोन्तराद्यावापृथिवीऽइमे ॥ शारदावृतूऽ
अभिकल्प्पमानाऽइन्द्रमिवदेवाऽअभिसंविशन्तुतयादेवतया
ङ्गिरस्वद्ध्रुवेसीदतम् ॥ १६ ॥ [ ६-३ ] आयुर्म्मे । पाहिप्प्रा
णम्मेपाह्यपानम्मेपाहिव्यानम्मेपाहिचक्षुर्म्मेपाहिश्श्रोत्रम्मे
पाहिवाचम्मेपिन्वमनोमेजिन्वात्मानम्मेपाहिज्योतिर्म्मेय
च्छ ॥ १७ ॥ माच्छन्दः । प्प्रमाच्छन्दःप्प्रतिमाच्छन्दोऽअस्त्री
वयश्[1]च्छन्दःपङ्क्तिश्च्छन्दऽउष्णिक्छन्दोबृहतीच्छन्दोनुष्टु

१ अत्र "अस्त्रीवयश्छन्दः" इत्यत्र "चछयोः शम्" इत्यनेन यकारोत्तरवर्तिनो विसर्जनीयस्य शकारः ।

प्पङ्क्तिश्छन्दो॑ विराट्छन्दो॑ गायत्रीच्छन्द॑स्त्रिष्टुप्छन्दो॒ जग॑तीच्छन्द॑:
॥ १८ ॥ पृथिवीच्छन्द॑: ॥ पृथिवीच्छन्दो॒ऽन्तरि॑क्षञ्छन्दो॒
द्यौश्छन्द॒: समा॒श्छन्दो॒ नक्ष॑त्राणि॒च्छन्दो॒ वाक्छन्दो॒ मन॒
श्छन्द॑: कृषिश्छन्दो॒ हिर॑ण्यञ्छन्दो॒ गौश्छन्दो॒ऽजाच्छन्दो
ऽश्वश्छन्द॑: ॥ १९ ॥ अ॒ग्निर्दे॒वता॑ ॥ अ॒ग्निर्दे॒वता॒ वातो॑ दे॒व
ता॒ सूर्यो॑ दे॒वता॑ चन्द्रमा॑ दे॒वता॒ वस॑वो दे॒वता॑ रु॒द्रा दे॒वता॑ऽदि॒त्या दे॒व ॥ १४२ ॥
ता॑ मरुतो॑ दे॒वता॒ विश्वे॑ दे॒वा दे॒वता॒ बृह॒स्पति॑र्दे॒वतेन्द्रो॑ दे॒वता॒ वरु॑णो

देवता ॥ २० ॥ मूर्द्धासि ॥ मूर्द्धासिराड्ध्रुवासिधरुणाधर्त्र्यसि धरणी ॥ आयुषेत्त्वाव्वर्च्चसेत्त्वाकृष्ष्यैत्त्वाक्षेमायत्त्वा ॥ २१ ॥ यन्त्रीराट् ॥ यन्त्रीराड्यन्त्र्यसियमनीध्ध्रुवासिधरित्री ॥ इषेत्त्वोर्ज्जेत्त्वारय्यैत्त्वापोषायत्त्वालोकन्ताऽइन्द्रम् ॥ २२ ॥ [ ६-५ ] आशुस्त्रिवृत् ॥ आशुस्त्रिवृद्भान्तः पञ्चदशो व्व्योमासप्तदशोधरुणंऽएकविंशः प्रतूर्त्तिरष्टादशस्तपोनवदशोऽभीवर्त्तः सविंशो

१ अध्याय १२—लोकंपृण. ५४ १—ताऽअस्य. ५५ २। इंद्रंविश्वाः. ३ ५६ ॥ इति प्रतीकानि ॥ २ अभीवर्त्तः। अत्र "अश्वरश्मिमतिसुमतिश्वसुतचारयघृणिसेदिमेन्द्रियधारयचित्रभङ्गुरवयुनाश्वस्यहृदयघुव्यर्त्तोध्यवताभ्यर्चशक्तिपुरुशचि वकारे" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वकारे परे अभि इत्यस्य ह्रस्वेकारस्य दीर्घेकारः।

वर्च्चौद्वाविꣳशःसम्भरणस्त्रयोविꣳशोयोनिश्चतुर्विꣳशोगर्ब्भाꣳ
पञ्चविꣳशऽओजस्त्रिणवःक्रतुरेकत्रिꣳशःप्प्रतिष्ठात्रयस्त्रिꣳशो
ब्ब्रध्नस्यविष्टपञ्चतुस्त्रिꣳशोनाकःषट्त्रिꣳशोविवर्त्तोष्टाचत्त्वारिꣳ
शोधर्त्रञ्चतुष्टोमः ॥ २३ ॥ [ १-६ ] अग्नेर्ब्भागः ॥ अग्नेर्ब्भा
गोसिदीक्षायाऽआधिपत्त्यम्ब्रह्मस्पृतन्त्रिवृत्स्तोमऽइन्द्रस्यभा

---

१ बध्नस्य । अत्र स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र (शु. य. प्रा. ४ अ. १०० सू.) इत्यनेन द्वित्वम् । न त्वत्र धकारोत्तरवर्तिनो नकारस्य स्ववर्गीयत्वेन स्ववर्गीये चानुत्तमे (शु. य. प्रा. ४ अ. ११५ सू.) इत्यनेन निषेधः । तस्यानुत्तमे एव स्ववर्गीये वर्णपरे निषेधात् । अत्र तु अनुनासिकाश्चोत्तमाः (य. शु. प्रा. १ अ. ८६ सू.) इत्यनेन वर्गोत्तमा ङञणनमाः ( वर्गोत्तमसंज्ञकाः ) अनुनासिका भवन्ति । इति धकारत्तरोवर्तिनो नकारस्य वर्गोत्तमत्त्वात्तदतिरिक्तेषु वर्णपरेषु स्ववर्गीयेष्वेव द्वित्वनिषेधो बोध्यः । एवं तत्तत्स्थलेषु ज्ञेयम् ।

ग्गोसिव्विष्ण्णोराधिपत्त्यङ्क्षत्रꣳस्पृतम्पञ्चदशस्त्तोमोनृचक्क्ष
साम्भागोसिधातुराधिपत्त्यञ्जनित्रꣳस्पृतꣳसप्तदशस्त्तोमो
मित्रस्यभागोसिव्वरुणस्याधिपत्त्यन्दिवोव्वृष्टिर्व्वातस्पृतऽएक
विꣳशस्त्तोमोव्वसूनाम्भागः ॥ २४ ॥ व्वसूनाम्भागः ॥ व्वसू
नाम्भागोसिरुद्राणामाधिपत्त्यञ्चतुष्प्पात्स्पृतञ्चतुर्व्विꣳशस्त्तो
मऽआदित्त्यानाम्भागोसिमरुतामाधिपत्त्यङ्गर्ब्भाःस्पृताःपञ्च
विꣳशस्त्तोमोदित्त्यैभागोसिपूष्ण्णऽआधिपत्त्यमोजःस्पृतन्त्रि

णवस्त्तोमो देवस्य सवितुर्भागोसि बृहस्प्पतेराधिपत्त्यꣳसमी
चीर्द्दिशस्पृताश्चतुष्टोमस्त्तोमो यवानाम्भागः ॥ २५ ॥ यवा
नाम्भागः ॥ यवानाम्भागोस्ययवानामाधिपत्त्यम्प्रजास्पृता
श्चतुश्चत्त्वारिꣳशस्त्तोमऽऋभूणाम्भागोसि विश्वेषान्देवानामा
धिपत्त्यम्भूतꣳस्पृतन्त्रयस्त्रिꣳशस्त्तोमः सहश्च ॥ २६ ॥ सह
श्च । सहस्यश्च हैमन्तिकावृतूऽअग्नेरन्तःश्लेषोसि कल्प्पेतान्द्या
वापृथिवी कल्प्पन्तामापऽओषधयः कल्प्पन्तामग्नयः पृथङ्मम

मुज्यैष्ठ्यायसव्र्वंताः ॥ येऽअग्नयःसमनसोन्तराद्यावापृथिवीऽ
इमे ॥ हैमन्तिकावृतूऽअभिकल्प्पमानाऽइन्द्रमिवदेवाऽअभि
संविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥२७॥ [४-७] एकं
यास्तुवत। प्प्रजाऽअधीयन्तप्प्रजापतिरधिपतिरासीत्तिसृभिर[1]
स्तुवतब्रह्मासृज्यतब्रह्मणस्प्पतिरधिपतिरासीत्पञ्चभिरस्तु
वतभूतान्यसृज्यन्तभूतानाम्पतिरधिपतिरासीत्सप्तभिरस्तु

१ तिसृभिः। अत्र "भाविभ्यः सः षं समानपदे" (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन षत्वप्राप्तौ "ऋकाररेफारुदयश्च" (शु. य. प्रा. ३ अ. ८३ सू.) इत्यनेन यत्र ऋकारोदयः, रेफोदयः, अरुदयश्च सकारस्तत्र प्रकृत्या स्यात्तेनात्र सस्य ऋकारोदयत्वान्न षत्वम्।

वतसप्तऽऋषयोऽसृज्यन्तधाताधिपतिरासीन्नवभिरस्तुवत
॥१४५॥ ॥२८॥ नवभिरस्तुवत। पितरोऽसृज्यन्तादितिरधिपत्न्यासीदे ॥ १४ ॥
कादुशभिरस्तुवतऽऋतवोऽसृज्यन्तार्त्तवाऽअधिपतयऽआसँस्त्र
योदुशभिरस्तुवतमासाऽअसृज्यन्तसंवत्त्सरोधिपतिरासीत्त्प
ञ्चदुशभिरस्तुवतक्क्षत्रमसृज्यतेन्द्रोधिपतिरासीत्त्सप्तदुशभि
रस्तुवतग्ग्राम्म्याश्पशवोऽसृज्यन्तबृहस्प्पतिरधिपतिरासीन्नव ॥ १४५ ॥
दुशभिरस्तुवत॥२९॥नवदुशभिरस्तुवत।शूद्रार्य्यावसृज्येता

महोरात्त्रेऽअधिपत्क्नीऽआस्त्तामेकांविᳬंशत्त्यास्त्तुवतैकशफाः

पुशवोसृज्ज्यन्तुव्वरुणोधिपतिरासीत्त्रयोंविᳬंशत्त्यास्त्तुवतक्क्षु

द्द्राःपुशवोसृज्ज्यन्तपूषाधिपतिरासीत्त्पञ्चंविᳬंशत्त्यास्त्तुवतार

ण्ण्याःपुशवोसृज्ज्यन्तव्वायुरधिपतिरासीत्त्सप्तंविᳬंशत्त्यास्त्तुव

तुद्यावांपृथिवीव्व्यैतांव्वसंवोरुद्द्राऽआदित्त्याऽअनुव्व्यायँस्तऽए

वाधिपतयऽआसन्नवंविᳬंशत्त्यास्त्तुवत ॥३०॥ नवंविᳬंशत्त्या

स्त्तुवत ॥ नवंविᳬंशत्त्यास्त्तुवतव्वनस्प्पतंयोसृज्ज्यन्तसोमोधि

पतिरासीदेकंत्रिꣳशतास्तुवतप्प्रजाऽअंसृज्ज्यन्तुयवाश्श्चायंवा
श्श्चाधिपतयऽआसँस्त्रयंस्त्रिꣳशतास्तुवतभूतान्यंशाम्म्यन्प्प्रजा
पंतिःꣳपरमेष्ठ्यधिंपतिरासीह्लोकन्ताऽइन्द्रंम् ॥ ३१ ॥ [ ४-८ ]
इतिश्रीवाजसनेयसंहितायांचतुर्दशोऽध्यायः ॥ १४ ॥ श्रीवेद
पुरुषायनमः ॥ अनुवाकसूत्रम् ॥ अग्नेजातान्पञ्च,रश्मिना
सत्यायचतस्रो,राज्ञ्यसिपञ्चा,यंपुरःपञ्चा,ग्निर्मूर्द्धैकोनत्रिꣳश, ॥ १४६ ॥

---

१ अध्यायः १२–लोकंपृण. १–ताऽअंस्य. २ । इंद्राग्नीविश्वाः. ३ इति प्रतीकानि ॥
॥ मंत्रः ॥ ५४ ५५ ५६

द्येनऽऋषयोष्टौ, तपश्चनव, सप्त पञ्चषष्टिः ॥ [ अ. १५ मं. ६५ अनु. ७ ] ॥ हरिः ॐ ॥ अग्नेर्जातान् ॥ अग्नेर्जातान्प्रणुदा नःसपत्नान्प्रत्यजातान्नुदजातवेदः ॥ अधिनोब्रूहिसुमनाऽअ हेडँस्तवस्यामशर्म्मंस्त्रिवरूथऽउद्भौ ॥ १ ॥ सहसाजातान् ॥ सह साजातान्प्रणुदानःसपत्नान्प्रत्यजाताञ्जातवेदोनुदस्व ॥ अधि नोब्रूहिसुमनस्यमानोव्वयꣳस्यामप्रणुदानःसपत्नान् ॥ २ ॥

१ प्रणुदानः । अत्र प्रनुदान इति पदम् । अत्र समानपदत्वाभावेन "ऋषरेभ्यः" इत्यनेन णत्वाप्राप्तौ "प्रनेतिनुदातिहिनोमीनाम्" ( शु. य. प्रा. ३ अ. ८९ सू. ) इत्यनेन प्रशब्दात्परे स्थितानामेतेषां नकारस्य णत्वविधानादत्र णत्वम् । तथा चात्र प्रनुद नः दकारोत्तरवर्तिनः ह्रस्वाकारस्य नकारे परे "धारयोव०" ( शु. य. प्रा. ३ अ. १०८ सू. ) इत्यनेन दीर्घाकारः ।

षोडशीस्त्तोमं÷ ॥ षोडशीस्त्तोमऽओजोद्द्रविणञ्चतुश्चत्त्वारिꣳ
शस्त्तोमोव्वर्च्चोद्द्रविणम् ॥ अग्नेश्पुरीषमस्यप्प्सोनामतान्त्वा
व्विश्श्वेऽअभिगृणन्तुदेवाः ॥ स्तोमपृष्ठाघृतवतीहसीदप्प्रजाव
दस्म्मेद्द्रविणायजस्व ॥ ३ ॥ एवश्छन्दं÷ ॥ एवश्छन्दो
व्वरिवश्छन्दं÷शम्भूश्छन्दं÷परिभूश्छन्दऽआच्छच्छन्दो
मनश्छन्दोव्यचश्छन्दं÷सिन्धुश्छन्दं÷समुद्द्रश्छन्दं÷स
रिरञ्छन्दं÷ककुप्छन्दस्त्रिककुप्छन्दं÷काव्यञ्छन्दोऽअङ्कुप

च्छन्दोक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्दो विष्टारपङ्क्तिश्छ
न्दः क्षुरोभ्रज श्छन्दऽआच्छच्छन्दः प्रच्छच्छन्दः ॥ ४ ॥
आच्छच्छन्दः प्रच्छच्छन्दः । सँय्यच्छन्दो विय च्छन्दो बृ
हच्छन्दो रथन्तरञ्छन्दो निकायश्छन्दो विवधश्छन्दो गिर
श्छन्दो भ्रजश्छन्दः सँस्तुप्छन्दो नुष्टुप्छन्दऽएवश्छ
न्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो विष्पर्द्धाश्छ
न्दो विशालञ्छन्दश्छदिश्छन्दो दूरोहणञ्छन्दस्तन्द्रञ्छ

न्दोऽअङ्क्वाङ्कञ्छन्दः ॥ ५ ॥ [ ५-१ ] रश्मिम्मनासत्त्या
यं । सत्त्यञ्जिन्न्वप्प्रेतिनाधर्म्मणाधर्म्मञ्जिन्न्वान्विवत्त्यादिवादि
वञ्जिन्न्वसन्धिनान्तरिक्क्षेणान्तरिक्क्षञ्जिन्न्वप्प्रतिधिनापृथि
व्यापृथिवीञ्जिन्न्वविष्ट्टम्भेनवृष्ट्ट्यावृष्ट्टिञ्जिन्न्वप्प्रवयान्हाहर्ज्जि
न्न्वानुयारात्र्यारात्रीञ्जिन्न्वोशिजावसुब्भ्योवसूञ्जिन्न्वप्प्रकेते
नादित्त्येब्भ्यऽआदित्त्याञ्जिन्न्वतन्तुनारायः ॥ ६ ॥ तन्तु
नारायः ॥ तन्तुनारायस्प्पोषेणरायस्प्पोषञ्जिन्न्वसꣳसर्प्पेणश्श्रु

तायंश्रुतञ्जिन्वैडेनौषधीभिरोषधीर्जिन्वोत्तमेनंतनूभिस्तनू
र्जिन्वव्वयोधसाधीतेनाधीतञ्जिन्वाभिजितातेजसातेजोजिन्व
॥ ७ ॥ प्रतिपदसि । प्प्रतिपदेत्त्वानुपदस्यनुपदेत्त्वासम्पद
सिसम्पदेत्त्वातेजोसितेजसेत्त्वात्रिवृदसि ॥ ८ ॥ त्रिवृद
सि । त्रिवृतेत्त्वाप्प्रवृदसिप्प्रवृतेत्त्वाव्विवृदसिव्विवृतेत्त्वासवृदसि
सवृतेत्त्वाक्क्रमोस्याक्क्रमायत्त्वासङ्क्रमोसिसङ्क्रमायत्त्वोत्क्रमोस्यु
त्क्रमायत्त्वोत्क्रान्तिरस्युत्क्रान्त्यैत्त्वाधिपतिनोर्जोर्जञ्जिन्व

शु॰ य॰ संहि॰ ॥ ९ ॥ [४-२] राज्ञ्यंसि ॥ राज्ञ्यंसिप्प्राचीदिग्ग्वसंवस्त्ते पू॰ अ॰

॥१४९॥ देवाऽअधिंपतयोग्ग्निर्हैतीनाम्प्रंतिधर्त्तात्त्रिवृत्त्वास्त्तोमंः पृथि ॥ १५ ॥

व्याᳪश्रंयत्त्वाज्ज्यंमुक्क्थमव्व्यंथायैस्त्तब्भ्नातुरथन्त्तरᳪंसाम

प्प्रतिंष्ठित्त्याऽअन्तरिंक्क्षऽऋषंयस्त्त्वाप्प्रथमजादेवेषुंदिवोमा

त्त्रयाव्वरिम्म्णाप्प्रंथन्तुव्विधर्त्ता चायमधिंपतिश्च्चतेत्त्वासर्व्वेसंवि

दानानाकंस्यपृष्ठेस्स्वर्ग्गेलोकेयजंमानञ्चसादयन्तु ॥ १० ॥ व्विरा ॥ १४९ ॥

डंसि ॥ व्विराडंसिदक्क्षिणादिग्ग्रुद्द्रास्त्तेदेवाऽअधिंपतयऽइन्द्रो

हेतीनाम्प्रतिधर्त्तापञ्चदशस्त्वास्तोमः पृथिव्याꣳश्रयतुप्रऽ
उगमुक्थमव्यथायैस्तभ्नातुबृहत्सामप्प्रतिष्ठित्याऽअन्तरि
क्षऽऋषयस्त्वाप्प्रथमजादेवेषुदिवोमात्रयाव्वरिम्मणाप्प्रथन्तु
व्विधर्त्ताचायमधिपतिश्चतेत्वासर्व्वेसंविदानानाकस्यपृष्ठेस्वर्ग्गे
लोकेयजमानञ्चसादयन्तु ॥ ११ ॥ सम्म्राडसि । प्प्रतीची
दिगादित्यास्तेदेवाऽअधिपतयोव्वरुणोहेतीनाम्प्रतिधर्त्तासप्त
दशस्त्वास्तोमःपृथिव्याꣳश्रयतुमरुत्वतीयमुक्थमव्य

थायैस्त्तभ्नातुव्वैरूपᳬसामप्प्रतिंष्ठित्त्याऽअन्तरिंक्क्षऽऋषंय
स्त्त्वाप्प्रथमजादेवेषुंदिवोमात्त्रंयाव्वरिम्म्णाप्प्रंथन्तुव्विधर्त्तांच्चा
यमधिंपतिश्श्चतेत्त्वासर्व्वैसंविदानानाकंस्यपृष्ठेस्वर्ग्गेंलोकेयजंमा
नञ्चसादयन्तु ॥१२॥ स्वराडंसि ॥ स्वराडस्युदींचीदिङ्म्मरुतंस्त्ते
देवाऽअधिंपतयᳬसोमोंहेतीनाम्प्रंतिधर्त्तैकंविᳬशस्त्त्वास्त्तो
मं÷पृथिव्व्याᳬश्रंयतुनिष्क्केवल्ल्यमुक्क्थमव्व्यंथायैस्त्तभ्नातुव्वैरा
जᳬसामप्प्रतिंष्ठित्त्याऽअन्तरिंक्क्षऽऋषंयस्त्त्वाप्प्रथमजादेवे

षुदिवोमात्रंयाव्वरिम्म्णाप्प्रथन्तुव्विधर्त्ताचायमधिपतिश्चतेत्त्वा
सर्व्वेसंविदानानाकस्यपृष्ठेस्वर्ग्गेलोकेयजमानञ्चसादयन्तु ।१३।
अधिपत्न्यसि। बृहतीदिग्विश्वेतेदेवाऽअधिपतयोबृहस्प्पतिर्हे
तीनाम्प्रतिधर्त्तात्रिणवत्रयस्त्रिꣳशौत्त्वास्त्तोमौपृथिव्याꣳश्रय
तांव्वैश्वदेवाग्निमारुतेऽउक्थेऽअव्यथायैस्त्तब्भ्नीताꣳशाक्वररै
वतेसामनीप्प्रतिष्ठित्त्याऽअन्तरिक्षऽऋषयस्त्वाप्प्रथमजादेवे
सं. २६ षुदिवोमात्रंयाव्वरिम्म्णाप्प्रथन्तुव्विधर्त्ताचायमधिपतिश्चतेत्त्वा

सर्व्वैसंविदानानाकंस्यपृष्ठेस्वुर्ग्गैलोकेयजमानन्त्वसादयन्तु ।१४।
[ ५-३ ] अयम्पुरः ॥ अयम्पुरोहरिकेशःसूर्य्यरश्मिस्तस्य
रथगृत्सश्चरथौजाश्चसेनानीग्ग्रामण्ण्यौ ॥ पुञ्जिकस्थलाचक्र
तुस्थलाचाप्सरसौदङ्क्ष्णवःपशवोहेतिःपौरुषेयोव्वधःप्प्रहेति
स्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्ष्मोयश्च्व
नोद्वेष्टितमेषाञ्जम्भेदद्ध्मः॥१५॥अयन्दक्षिणा।विश्वकर्म्मा
तस्यरथस्वनश्चरथेचित्रश्चसेनानीग्ग्रामण्ण्यौ ॥ मेनकाचसहज

न्याचाप्प्सरसौयातुधानाहेतीरक्षांᳬसिप्प्रहेतिस्त्तेभ्योन
मोऽअस्त्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्म्मोयश्च्चनोद्वेष्ट्टितमे
षाञ्जम्भेदद्ध्मः ॥ १६ ॥ अयम्पश्चात् ॥ अयम्पश्चाद्विश्वव्यं
चास्त्तस्यरथप्प्रोतश्चासमरथश्चसेनानीग्ग्रामण्यौ ॥ प्रम्म्लो
चन्तीचानुम्म्लोचन्तीचाप्प्सरसौव्व्याग्घ्राहेतिःसर्प्पाःप्प्रहेति
स्त्तेभ्योनमोऽअस्त्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्म्मोयश्च्च
नोद्वेष्ट्टितमेषाञ्जम्भेदद्ध्मः ॥ १७ ॥ अयमुत्त्तरात् ॥ अयमु

त्तरात्त्सँय्यद्वंसुस्त्तस्युताक्क्ष्यंश्चारिष्टनेमिश्चसेनानीग्ग्राम
ण्ण्यौ ॥ व्विश्वाचीचघृताचीचाप्प्सरसावापोहेतिर्व्वातःप्प्रहेति
स्त्तेब्भ्योनमोऽअस्त्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्म्मोयश्च
नोद्वेष्टितमेषाञ्जम्भेदद्ध्मः ॥१८॥ अयमुपरि ॥ अयमुपर्य्यर्व्वा
ग्ग्वसुस्त्तस्यसेनजिच्चसुषेणश्चसेनानीग्ग्रामण्ण्यौ ॥ उर्व्वशीचपू
र्व्वचित्तिश्चाप्प्सरसावव्वस्फूर्ज्जन्हेतिर्व्विद्युत्त्प्रहेतिस्त्तेब्भ्योनमोऽ ॥ १५२ ॥
अस्त्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्म्मोयश्चनोद्वेष्टितमेषा

ज्म्भेदद्ध्मः ॥ १९ ॥ [५-४] अग्ग्निर्म्मूर्द्धा । दिवःककु
त्त्पतिः पृथिव्व्याऽअयम् ॥ अपाᳯंरेताᳯंसिजिन्न्वति ॥ २० ॥
अयमग्निः । सहस्रिणोव्वाजस्यशतिनस्प्पतिः ॥ मूर्द्धाकवी
रयीणाम् ॥ २१ ॥ त्वामग्ग्ने ॥ त्वामग्ग्नेपुष्कराद्ध्यथर्व्वानिर
मन्थत ॥ मूर्द्ध्नोव्विश्वस्यव्वाघतः ॥ २२ ॥ भुवोयज्ञस्य ॥ भुवोय
ज्ञस्यरजसश्चनेतायत्रानियुद्भिःसचसेशिवाभिः ॥ दिविमूर्द्धा
नन्दधिषेस्वर्षाञ्जिह्वामग्ग्नेचकृषेहव्व्यवाहम् ॥ २३ ॥ अबोद्ध्य

ग्निः । समिधाजनानाम्प्प्रतिधेनुमिवायतीमुषासम् ॥ यह्वाऽ
॥१५३॥ इवप्प्रवयामुज्जिहानाःप्प्रभानवःसिस्रतेनाकमच्छ ॥ २४ ॥ ॥ १५ ॥
अवोचामकवये ॥ अवोचामकवयेमेध्यायवचोवन्दारुवृषभा
यवृष्णे ॥ गविष्ठिरोनमसास्तोममग्नौदिवीवरुक्ममुरुव्यञ्च
मश्श्रेत् ॥ २५ ॥ अयमिह । प्प्रथमोधायिधातृभिर्होतायजि
ष्ठोऽअध्वरेष्ष्वीड्यः ॥ यमप्प्नवानोभृगवोविरुरुचुर्वनेषुचित्रं ॥१५३॥

---

१ धेनुमिवायतीमुषासम् । अत्र ईम्‌शब्दात्परस्य उषशब्दस्याकारस्य "उषमहोभिर्नक्तेमी०" ( शु. य. प्रा. ३ अ. ११८ सू. ) इत्यनेन दीर्घः ।

व्विभ्भृवंव्विशेविशे ॥ २६ ॥ जनस्यगोपाः ॥ जनस्यगोपाऽअ

जनिष्टजागृविरग्निः सुदक्षः सुवितायनव्यसे ॥ घृतप्प्रतीको

बृहतादिविस्पृशाद्युमद्विभातिभरतेभ्यः शुचिः ॥ २७ ॥

त्वामग्ने ॥ त्वामग्नेऽअङ्गिरसोगुहाहितमन्ववविन्दञ्छिश्श्रि

याणंव्वनेवने ॥ संजायसेमत्थ्यमानः सहोमहत्त्वामाहुः सहस

---

१ दिविस्पृशाः । अत्र "भाविभ्यः सः षः समानपदे" इत्यनेन प्राप्तस्य षत्वस्य अनुसंतनोतुबृहस्पतिसुतस्यसुसमिद्धायसुसन्दृशमभिसत्त्वाऽभिसंविशन्तुसुसस्याऽअतिस्थूलस्मुसलेपक्कीसंयाजानृकतुस्थलाञ्जिसक्थो दिविस्पृशा०" (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन प्रकृतिभावे षत्वनिषेधः । २ सः जायसे । अत्र "व्यञ्जने च" (शु. य. प्रा. ३ अ. १६ सू.) इत्यनेन जायसे परे स इत्यस्य विसर्जनीयस्य लोपे सजायसे इति पदम् ।

स्पुत्रमङ्गिरः ॥ २८ ॥ सखायꣳसम् ॥ सखायꣳसंवः सम्म्य
ञ्चमिषꣳस्तोमञ्चाग्नये ॥ वर्षिष्ठायक्षितीनामूर्ज्जोनप्त्रेसहस्व
ते ॥ २९ ॥ सꣳसमित् ॥ सꣳसमिद्युवसेवृषन्नग्नेविश्वान्यर्य्य
ऽआ ॥ इडस्प्पदे[1]समिध्यसेसनोवसून्याभर ॥ ३० ॥ त्वाग्ने
चित्रश्रवस्तम ॥ त्वाग्नेचित्रश्रवस्तममहवन्तेविक्षुजन्तवः ॥
शोचिष्केशम्पुरुप्प्रियाग्नेहव्यायवोढवे ॥ ३१ ॥ एनावः ॥ ॥ १५४ ॥

१ इडः पदे इति पदम् । अत्र "आविनिरिडश्इडाया वसतिर्वैरिवः" (शु. य. प्रा. ३ अ. २३ सू.) इत्यनेन विसर्जनीयस्य ककारपकारपरयोः सकारः-षकारश्च यथायोगं विधीयते । इडस्प्पदे इति रूपम् ।

एनावोऽअग्निन्नमसोर्ज्जोनपातमाहुवे ॥ प्रियञ्चेतिष्ठमरतिꣳ

स्वद्ध्वरंव्विश्श्वस्यदूतममृतम् ॥ ३२ ॥ व्विश्श्वस्यदूतम् ॥ व्विश्श्वस्य

दूतममृतंव्विश्श्वस्यदूतममृतम् ॥ सयोजतेऽअरुषाव्विश्श्वभोजसा

सदुद्द्रवत्त्स्वाहुतꣳ ॥३३॥ सदुद्द्रवत् ॥ सदुद्द्रवत्त्स्वाहुतꣳसदुद्द्र

वत्त्स्वाहुतꣳ ॥ सुब्ब्रह्ममायज्ज्ञश्शुशमीव्वसूनान्देवꣳराधोजनाना

म ॥३४॥ अग्ग्नेव्वाजस्य ॥ अग्ग्नेव्वाजस्यगोमतऽईशानꣳसहसो

यहो ॥ अस्म्मेधेहिजातवेदोमहिश्श्रवः ॥ ३५ ॥ सऽइधानश्श ॥

सऽइंधानोव्वंसुष्क्कविरुग्ग्निरीडेन्न्योगिरा ॥ रेवदुस्म्मब्भ्यंम्पुर्व्वणी
कदीदिहि ॥ ३६ ॥ क्षुपोराजन् ॥ क्षुपोराजन्नुतत्क्मनाग्ग्नेव्वस्त्तौ
रुतोषसंः ॥ सतिंग्ग्मजम्भरुक्क्षसोदहुप्प्रति ॥ ३७ ॥ भुद्द्रोनंः ॥
भुद्द्रोनोऽअुग्ग्निराहुंतोभुद्द्रारातिःसुंभगभुद्द्रोऽअंद्ध्वरः ॥ भुद्द्राऽ
उतप्प्रशंस्त्तयः ॥ ३८ ॥ भुद्द्राऽउत । प्प्रशंस्त्तयोभुद्द्रम्मनंः
कृणुष्ष्ववृत्त्रतूर्ये ॥ येनांसुमत्त्सुंसासहंः ॥ ३९ ॥ येनांसुम

१ वसुष्कविः इति । "कविष्करत्कृधिषु" (शु. य. प्रा. ३ अ. ३२ सू.) इत्यनेन कविः करत् कृधिः एतेषु परेषु विसर्जनीयस्य सकारः षकारश्च भवति । तेनात्र कविः परे पूर्वविसर्जनीयस्य षकारे कृते "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन ककारस्य द्वित्वम् ।

त्त्सु । सासहोवंस्त्थिरातंनुहिभूरिशर्द्धंताम् ॥ व्वनेमांतेऽअभि
ष्टिंभिः ॥ ४० ॥ अग्निन्तम् ॥ अग्निन्तम्मन्न्येयोव्वसुरस्त्तँ
य्यँय्यन्तिधेनवं÷ ॥ अस्त्तमर्व्वन्तऽआशवोस्त्तन्नित्त्यासोव्वा
जिनऽइषंस्तोतृब्भ्यऽआभंर ॥ ४१ ॥ सोऽअग्निः[1] ॥ सोऽ
अग्निर्य्योव्वसुर्गृणेसँय्यमायन्तिधेनवं÷ ॥ समर्व्वन्तोरघु
द्रुवंःसञ्सुजातासं÷सूरयऽइषंस्तोतृब्भ्यऽआभंर ॥ ४२ ॥
उभेसुश्च्चन्द्र । सर्प्पिषोदर्व्वीश्श्रीणीषऽआसनिं ॥ उतोनऽउत्त्पु

१ सोऽअग्निः । अत्र "व्यञ्जने" च (शु. य. प्रा. ३ अ. १७ सू.) इति सूत्रे व्यञ्जने परे एव विसर्गस्य लोपविधानान्न लोपस्ततो विसर्गस्य रुत्वे

पूरूर्ग्राऽउक्थेषुंशवसस्प्पतऽइषंᳪंस्तांतृब्भ्यऽआभंर ॥ ४३ ॥
अग्ग्नेतम् ॥ अग्ग्नेतमुद्याश्श्वन्नस्त्तोमैंःक्रतुन्नभुद्रᳬंहृदिस्पृ
शंम् ॥ ऋद्ध्यामांतऽओहैंः ॥ ४४ ॥ अधाहि ॥ अधा
ह्यग्ग्नेक्क्रतोंर्ब्भुद्रस्यदक्क्षंस्यसाधोः ॥ रथीऽर्ऋतस्यंबृहुतो
बुभूथं ॥ ४५ ॥ एभिर्न्नः ॥ एभिर्न्नौऽअर्क्कैर्ब्भवांनोऽअर्व्वा
ङ्स्वर्ण्णज्ज्योतिः ॥ अग्ग्नेव्विश्श्वेंभिःसुमनाऽअनींकैः ॥ ४६ ॥ 

ओत्वे सोऽश्वग्निः इति पदम् । २ सुश्चन्द्रः । अत्र "चन्द्रेसु शकारेण" (शु. य. प्रा. ३ अ. ५४ सू.) इत्यनेन चन्द्रशब्दे परे सुशब्दः शकारेण व्यवधीयते । तत "ऊष्मान्तस्थाभ्यश्च" स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन चकारस्य द्वित्वम् ।

अग्निꣳ होतारम् ॥ अग्निꣳ होतारम्मन्न्ये दास्वन्तंव्वसुꣳ सूनुꣳ
सहसोजातवेदसंव्विप्प्रन्नजातवेदसम् ॥ यऽऊर्द्ध्वयास्वद्ध्वरोदेवो
देवाच्च्याकृपा ॥ घृतस्यव्विब्भ्राष्ट्टिमनुवष्ट्टिशोचिषाजुह्वानस्य
सर्प्पिषः ॥ ४७ ॥ अग्नेत्त्वम् ॥ अग्नेत्त्वन्नोऽअन्तमऽउत
त्त्राताशिवोभवावरूत्थ्यः ॥ व्वसुरग्निर्व्वसुश्श्रवाऽअच्छानक्षि
द्युमत्तमꣳ रयिन्दाः ॥ तन्त्वाशोचिष्ठदीदिवꣳ सुम्नायनूनमी
महेसखिब्भ्यः ॥ ४८ ॥ [ २९-५ ] येनऽऋषयः ॥ येनऽऋषय

स्त्तपंसासुत्त्रमायुन्निन्धांनाऽअग्निꣳस्वंराभरंन्तः ॥ तस्मिन्न
हन्निदंधेनाकेंऽअग्निँय्यमाहुर्म्मनंवस्त्तीर्ण्णबंर्हिषम् ॥ ४९ ॥
तम्पत्नीभिः ॥ तम्पत्नीभिरनुंगच्छेमदेवाःपुत्त्रैर्ब्भ्रातृंभिरुत
वाहिरंण्ण्यैः ॥ नाकङ्गृब्भ्णानाःसुंकृतस्यंलोकेतृतीयेंपृष्ठेऽअधि
रोचनेदिवः ॥ ५० ॥ आवाचः ॥ आवाचोमध्यंमरुहद्भुर
ण्युरयमग्निःसत्पंतिश्चेकिंतानः ॥ पृष्ठेपृथिव्यानिहिंतोदवि
द्युतदस्पदङ्कृणुताँऽय्येपृंतन्न्यवंः ॥ ५१ ॥ अयमग्निः ॥

अयमग्निर्व्वीरतमोव्वयोधाःसहस्रियोद्द्योततामप्रयुच्छन् ॥ व्वि
भ्राजमानःसरिरस्यमद्ध्यऽउपप्रयाहिदिव्व्यानिधाम ॥ ५२ ॥
सम्प्रच्यवद्ध्वमुप । सम्प्रयाताग्नेपथोदेवयानान्कृणुद्ध्वम् ॥ पुनः
कृण्ण्वानापितरायुवानान्वाताᳪंसीत्त्वयितन्तुमेतम् ॥ ५३ ॥
उद्बुद्ध्यस्व ॥ उद्बुद्ध्यस्वाग्नेप्प्रतिजागृहित्त्वमिष्टापूर्त्तेसᳪंसृजेथा
मयञ्च ॥ अस्मिन्त्सधस्त्थेऽअद्ध्युत्तरस्मिन्विश्वेदेवायजमा
नश्चसीदत ॥ ५४ ॥ येनवहसि । सहस्रँय्येनाग्नेसर्व्ववेद

सम् ॥ तेनेमँऽयज्ञन्नोनयस्वर्द्देवेषुगन्तवे ॥ ५५ ॥ अयन्ते ॥
अयन्तेयोनिर्ऋत्त्वियोयतोजातोऽअरोचथाः ॥ तञ्जानन्न
ग्नऽआरोहाथानोवर्द्धयारयिम् ॥ ५६ ॥ [ ८-६ ] तपश्च ॥
तपश्चतपस्यश्चशैशिरावृतूऽअग्नेरन्तःश्लेषोसिकल्पेतान्द्या
वापृथिवीकल्पन्तामापऽओषधयःकल्पन्तामग्नयःपृथङ्मम
मज्यैष्ठ्यायसव्रताः॥येऽअग्नयःसमनसोन्तराद्यावापृथिवीऽ ॥ १५८ ॥
इमे ॥ शैशिरावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसं

विंशान्तुतयांदेवतंयाङ्गिरस्वद्ध्रुवेसींदतम् ॥ ५७ ॥ परमेष्ठी
त्त्वां । सादयतुदिवंस्पृष्ठे[१]ज्ज्योतिष्मतीम् ॥ व्विश्वंस्मैप्प्राणा
यांपानायंव्यानायव्विश्वञ्ज्योतिर्य्यच्छ ॥ सूर्य्यस्तेधिपतिस्त
यांदेवतंयाङ्गिरस्वद्ध्रुवासींद ॥ ५८ ॥ लोकम्पृंण । च्छिद्रम्पृ
णाथोसीदद्ध्रुवात्त्वम् ॥ इन्द्राग्नीत्त्वाबृहस्पतिरस्मिन्न्योनौ
वसीषदन् ॥ ५९ ॥ ताऽअंस्य ॥ ताऽअंस्यसूदंदोहसंःसोमंꣳ

---

१ दिवष्पृष्ठे । इत्यत्र "दिवोऽककुत्पृथिव्योः" (शु. य. प्रा. ३ अ. २४ सू.) इत्यनेन दिवः सम्बन्धिनः विसर्गस्य षकारत्वम् ।

श्रीणन्तिपृश्न्नयः ॥ जन्मन्देवानांविशस्त्रिष्वारोचनेदिवः
॥ ६० ॥ इन्द्रंविश्वाः ॥ इन्द्रंविश्वाऽअवीवृधन्त्समुद्रव्यचस
ङ्गिरः ॥ रथीतमरथीनांवाजानांसत्पतिम्पतिम् ॥ ६१ ॥
प्रोथदश्वः ॥ प्रोथदश्वोनयवसेविष्यन्यदामहःसंवरणाद्व्य
स्थात् ॥ आदस्यवातोऽअनुवातिशोचिरधस्मतेव्रजनङ्कृष्णण
मस्ति ॥ ६२ ॥ आयोष्ट्वा ॥ आयोष्ट्वासदनेसादयाम्म्यवत
श्छायायांसमुद्रस्यहृदये ॥ रश्मीवतीम्भास्वतीमायाद्या

म्भास्यापृ॑थिवीमोर्व्व॒न्तारि॑क्क्षम् ॥ ६३॥ प॒र॒मे॒ष्ठीत्त्वा॑ । सादय
तु॒दि॒वस्पृ॒ष्ठेव्व्यच॑स्वती॒म्प्रथ॑स्वती॒न्दि॒वँय॑च्छ॒दि॒वंन्दृ॑ᳫँह॒दि॒व॒
म्माहि॑ᳫँसीः ॥ व्विश्व॑स्म्मै॒प्प्रा॒णाया॑पा॒नाय॑व्व्या॒नायो॑दा॒नाय॑
प्प्रति॒ष्ठायै॑च॒रित्त्रा॑य ॥ सूर्य॑स्त्त्वा॒भिपा॑तु॒म॒ह्याऽस्व॒स्त्त्याच्छ॒र्द्दि
षा॒शन्त॑मेन॒तया॑दे॒वत॑याऽङ्गि॒र॒स्वद्ध्रु॒वेसी॑द॒तम् ॥ ६४ ॥ स॒ह॒स्र॑
स्यप्प्र॒मासि॑ । स॒ह॒स्र॑स्यप्प्रति॒मासि॑स॒ह॒स्र॑स्यो॒न्मासि॑साह॒स्रो॑सि
स॒ह॒स्राय॑त्त्वा ॥ ६५ ॥ [९-७] इतिश्रीवाजसनेयसंहितायां

पञ्चदशोऽध्यायः ॥ १५ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाक-
सूत्रम् ॥ नमस्तेषोडश, हिरण्यबाहव, ऽउष्णीषिणे, तक्षभ्यो,
ज्येष्ठायपञ्चकाः, स्रुत्यायचतस्रः, शंभवायैका, पार्य्यायपञ्च,
द्रापेऽअंधसोविꣳशति, र्नवषट्षष्टिः [ अ. १६ मं. ६६ अनु.
९ ]॥ हरिः ॐ॥ नमस्ते ॥ नमस्तेरुद्रमुन्यवऽउतोतऽइषवेन
मः ॥ बाहुभ्यामुततेनमः ॥ १ ॥ यातै । रुद्रशिवातनूरघो ॥ १६०॥

१ नमस्ते। इत्यत्र "तथयोः सम्" (शु. य. प्रा. ३ अ. ८ सू.) इत्यनेन मकारोत्तरवर्तिनो विसर्जनीयस्य तकारे परे सकारे कृते नमस्ते इति सिद्ध्यति।

रापापकाशिनी ॥ तयानस्तन्न्वाशन्तमयागिरिशन्ताभिचाक
शीहि ॥ २ ॥ यामिषुम् ॥ यामिषुङ्गिरिशन्तहस्त्तेबिभर्ष्ष्यस्त्तवे ॥
शिवाङ्गिरित्रताङ्कुरुमाहिᳪसीः पुरुषञ्जगत् ॥ ३ ॥ शिवेनव्व
चसा । त्वागिरिशाच्छावदामसि ॥ यथानःसर्व्वमिज्जगदय
क्ष्मᳪसुमनाऽअसत् ॥ ४ ॥ अद्ध्यवोचत् ॥ अद्ध्यवोचदधिव
क्ताप्प्रथमोदैव्योभिषक् ॥ अहीँश्च[1] सर्व्वाञ्जम्भयन्त्सर्व्वाश्च यातु

---

१ अहीन् च । इत्यत्र "चच्छयोः शम्" (शु. य. प्रा. ३ अ. १३५ सू.) इत्यनेन नकारस्य चछयोः परयोः शकारं विधीयते उपधायामनुनासिकमपि । तथा अहीँश्च इति कृते "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यने चकारस्य द्वित्वम् ।

धान्न्योधराचीꣳपरासुव ॥ ५ ॥ असौयः ॥ असौयस्ताम्म्रोऽ
अरुणऽउतबब्भ्रुःसुमङ्गलः ॥ येचैनꣳरुद्राऽअभितोदिक्षु
श्श्रिताःसहस्रशोवैषाꣳहेडऽईमहे ॥ ६ ॥ असौयः ॥ असौयो
वसर्प्पतिनीलग्ग्रीवोविलोहितꣳ ॥ उतैनङ्गोपाऽअदृश्श्रन्नदृश्श्र
न्नुदहार्य्यꣳसद्दृष्टोमृडयातिनꣳ ॥ ७ ॥ नमोऽस्तु ॥ नमोऽस्तु
नीलग्ग्रीवायसहस्राक्क्षायमीढुषे॥अथोयेऽअस्यसत्त्वानोहन्ते 

१ दिक्षुश्श्रिताः। अत्र दिक्षु इति पदम्। "करेफाभ्याञ्च" (शु. य. प्रा. ३ अ. ५८ सू.) इत्यनेन करेफाभ्यां सरस्य षकारस्य षत्वं विधीयते। तेनात्र सकारस्य षत्वे कषसंयोगे क्षः इति क्षत्वे रूपम्। "स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र" (शु. य. प्रा. ४ अ. १०० सू.) इत्यनेन शकारस्य द्वित्वम्।

ब्भ्योकरन्नमः ॥ ८ ॥ प्रमुञ्च ॥ प्रमुञ्चधन्वनस्त्वमुभयो
रात्क्योर्ज्याम् ॥ याश्चतेहस्तऽइषवःपरातार्भगवोवप ॥ ९ ॥
विज्यन्धनुःकपर्द्दिनोविशल्योबाणवाँ२॥ऽउत ॥ अनेश
न्नस्ययाऽइषवऽआभुरस्यनिषङ्गधिः ॥ १० ॥ याते । हेति
र्म्मीढुष्टमहस्तेबभूवतेधनुः ॥ तयास्म्मान्विश्वतस्त्वमय
क्ष्मयापरिभुज ॥ ११ ॥ परिते ॥ परितेधन्वनोहेतिरस्म्मा
न्वृणक्तुविश्वतः ॥ अथोयऽइषुधिस्तवारेऽअस्म्मन्निधेहि

तम् ॥ १२॥ अवतत्त्यधनुंः ॥ अवतत्त्यधनुष्ट्वꣳसहंस्राक्क्षश
तेषुधे ॥ निशीर्य्यँशल्यानाम्मुखांशिवोनंःसुमनांभव ॥ १३ ॥
नमंस्त्ते ॥ नमंस्त्तऽआयुंधायानांततायधृष्णवे ॥ उभा
ब्भ्यांमुततेनमोंबाहुब्भ्यान्तवधन्वंने ॥ १४ ॥ मानंः ॥
मानोंमहान्तंमुतमानोंऽअब्भंकम्मानऽउक्क्षन्तमुतमानंऽउ
क्क्षितम् ॥ मानोंव्वधीःपितरम्मोतमातरम्मानंःप्प्रियास्त्तन्वो ॥१६२॥
रुद्द्ररीरिषः ॥ १५ ॥ मानंस्त्तोके । तनंयेमानऽआयुंषिमानो

गोषुमानोऽअश्वेषुरीरिषः ॥ मानोवीरान्रुद्रभामिनोवधीर्ह
विष्मन्तःसदमित्त्वाहवामहे ॥ १६ ॥ [ १६-१ ] शतम्
॥ ८०० ॥ नमोहिरण्यबाहवे ॥ सेनान्येदिशाञ्चपतयेनमो
नमोवृक्षेभ्योहरिकेशेभ्यःपशूनाम्पतयेनमोनमः शष्पिञ्ज
रायत्त्विषीमतेपथीनाम्पतयेनमोनमोहरिकेशायोपवीतिनेपु
ष्टानाम्पतयेनमोनमोबभ्लुशाय ॥ १७ ॥ नमोबभ्लु
शाय । व्याधिनेन्नानाम्पतयेनमोनमोभवस्यहेत्यैजगताम्पत



१ त्विषिमते । अत्र शृणुतत्विषिध्रजिभवतपिबेतस्मतिष्ठरक्षा मकारे (शु. य. प्रा. ३ अ. ११७ सू.) इत्यनेन मकारे परे एते दीर्घा भवन्ति ।

येनमो॒नमो॑रु॒द्राया॑तता॒यिने॒क्षेत्रा॑णा॒म्पत॑ये॒नमो॒नमः॑सू॒ताया
ह॑न्त्यै॒वना॑ना॒म्पत॑ये॒नमो॒नमो॒रोहि॑ताय ॥ १८ ॥ नमो॒रोहि॑
ताय । स्थ॒पत॑ये॒वृक्षाणा॒म्पत॑ये॒नमो॒नमो॑भु॒वन्तये॑वारिवस्कृ॒
तायौष॑धीना॒म्पत॑ये॒नमो॒नमो॑म॒न्त्रिणे॑वाणि॒जाय॒कक्षा॑णा॒म्पत॑
ये॒नमो॒नमः॑ऽउ॒च्चैर्घो॑षायाक्र॒न्दय॑तेप॒त्ती॒नाम्पत॑ये॒नमो॒नमः॑
कृ॒त्स्नाय॒तया॑ ॥ १९ ॥ नमः॑कृ॒त्स्नाय॒तया॒ । धाव॑ते॒सत्त्व॑
ना॒म्पत॑ये॒नमो॒नमः॒ सह॑मानायनि॒व्या॒धिन॑ऽआव्या॒धिनी॑ना॒म्प

तंयेनमोनमौनिषङ्गिणेकुकुभायंस्तेनानाम्पतंयेनमोनमौनि
चेरवेपरिचुरायारंण्ण्यानाम्पतंयेनमोनमोव्वञ्चते ॥ २० ॥ नमो
व्वञ्चते । परिवञ्चतेस्त्तायूनाम्पतंयेनमोनमौनिषङ्गिणंऽइषुधि
मतेतस्कंराणाम्पतंयेनमोनमंः सृकायिभ्योजिघांᳬसद्भ्यो
मुष्णताम्पतंयेनमोनमौसिमद्भ्योनक्तुञ्चरंद्भ्योव्विकृन्ता
नाम्पतंयेनमंः ॥ २१ ॥ [ ५-२ ] नमंऽउष्णीषि
णे । गिरिचुरायंकुलुञ्चानाम्पतंयेनमोनमंऽइषुमद्भ्योधन्न्वा

यिभ्यश्च वो नमो नमऽआतन्वानेभ्यः प्रतिदधानेभ्यश्च वो
नमो नमऽआयच्छद्भ्योऽस्यद्भ्यश्च वो नमो नमो विसृजद्
भ्यः ॥ २२ ॥ नमो विसृजद्भ्यो । विध्यद्भ्यश्च वो
नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमः शयानेभ्य
ऽआसीनेभ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो
नमः सभाभ्यः ॥ २३ ॥ नमः सभाभ्यः । सभापति
भ्यश्च वो नमो नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमो नमऽआव्या

धिनीभ्योविविद्ध्यन्तीभ्यश्चवोनमोनमऽउगणाभ्यस्तृꣳह
तीभ्यश्चवोनमोनमोगणेभ्यः ॥ २४ ॥ नमोगणेभ्यो ।
गणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमोन
मोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमोविरूपेभ्योविश्वरू
पेभ्यश्चवोनमोनमःसेनाभ्यः ॥ २५ ॥ नमःसेनाभ्यः ।
सेनानिभ्यश्चवोनमोनमो रथिभ्योऽअरथेभ्यश्चवोनमोन
मःक्षत्तृभ्यःसङ्ग्रहीतृभ्यश्चवोनमोनमोमहद्भ्योऽअर्भके

 भ्यश्चवोनमः ॥ २६ ॥ [ ५-३ ] नमस्तक्षभ्यो । 

॥१६५॥ रथकारेभ्यश्चवोनमोनमःकुलालेभ्यःकर्म्मारेभ्यश्चवोनमो ॥ १६ ॥

नमोनिषादेभ्यःपुञ्जिष्ठेभ्यश्चवोनमोनमःश्वनिभ्योमृगयु

भ्यश्चवोनमोनमःश्वभ्यः ॥ २७ ॥ नमःश्वभ्यः ।

श्वपतिभ्यश्चवोनमोनमोभवायचरुद्रायचनमःशर्वायचपशु

पतयेचनमोनीलग्रीवायचशितिकण्ठायचनमःकपर्दिने ॥१६५॥

॥ २८ ॥ नमःकपर्दिने । चव्युप्तकेशायचनमःसहस्रा

क्षायंचशुतधंन्वनेचुनमोगिरिशुयायंचाशिपिविष्टायंचुनमो
मीढुष्टंमायुचेषुमतेचुनमोह्रस्वायं ॥ २९ ॥ नमोह्रस्वायं ।
चवामुनायंचुनमोबृहतेचुवर्षीयसेचुनमोवृद्धायंचसवृधेचुन
मोग्र्यायचप्रथुमायंचुनमंऽआशवें ॥ ३० ॥ नमंऽआ
शवें । चाजिरायंचुनमुःशीघ्र्यायचुशीभ्यायचुनमुऽऊ
र्म्यायचावस्वन्यायचुनमोनादेयायंचुद्वीप्यायच ॥ ३१ ॥
[५-४] नमोज्येष्ठायं । चकनिष्ठायंचुनमंःपूर्वजायंचापर

जायं॑चन॒मो॑मद्ध्य॒माय॑चापग॒ल्भाय॑च॒नमो॑जघ॒न्या॒यचबु
ध्न्या॒यच॒नम॒ᳪसो॒भ्या॑य ॥ ३२ ॥ नम॒ᳪसो॒भ्या॑य । चप्प्रति
स॒र्य्या॑यच॒नमो॒याम्म्या॑यच॒क्षेम्म्या॑यच॒नम॒ᳪश्श्लोक्या॑यचा
वसा॒न्या॒यच॒नम॑ऽउर्व्व॒र्य्या॑यच॒खल्ल्या॑यच॒नमो॒वन्न्या॑य ॥ ३३ ॥
नमो॒वन्न्या॑य । च॒कक्ष्या॑यच॒नम॑ᳪश्श्र॒वाय॑चप्प्रति॒श्श्र॒वाय॑च॒न
म॑ऽआ॒शुषे॑णायचा॒शुर॑थायच॒नम॒ᳪशूरा॑यचावभे॒दिने॑च॒नमो॑बि
ल्मिने॑ ॥ ३४ ॥ नमो॑बिल्मिने॑ । चकव॒चिने॑च॒नमो॑व॒र्म्मि ॥१६६॥

णे॑चव्व॒रूथिने॑च॒नमः॑श्श्रु॒ताय॑चश्श्रुतसे॒नाय॑च॒नमो॑दुन्दु॒भ्या॑
यचाहन॒न्न्याय॑च॒नमो॑धृ॒ष्णवे॑ ॥ ३५॥ नमो॑धृ॒ष्णवे॑ । चप्प्र
मृ॒शाय॑च॒नमो॑निष॒ङ्गिणे॑चेषुधि॒मते॑च॒नमः॑स्ती॒क्ष्णेष॑वेचायु॒धिने॑
च॒नमः॑स्वायु॒धाय॑चसु॒धन्व॑नेच ॥ ३६ ॥ [ ५-५ ] नम॒ꣳस्स्रु॒त्त्या॑
य । च॒पत्थ्या॑यच॒नम॒ꣳकाट्ट्या॑यच॒नीप्प्या॑यच॒नम॒ꣳकुल्ल्या॑यच
स॒र॒स्स्याय॑च॒नमो॑नादे॒याय॑चव्वैश॒न्ताय॑च॒नम॒ꣳकूप्प्या॑य ॥३७॥
नम॒ꣳकूप्प्या॑य । चाव॒ट्ट्याय॑च॒नमो॒व्वीद्ध्र्या॑यचात॒प्प्याय॑च॒न

मोमेग्घ्यांयचविद्युत्त्यांयचुनमोव्वर्ष्यांयचावुर्ष्यांयंचुनमो
व्वात्त्यांय ॥ ३८ ॥ नमोव्वात्त्यांय । चुरेष्म्म्यांयचुनमोव्वास्त्त
व्यांयचव्वास्तुपायंचुनमुः सोमांयचरुद्द्रायंचुनमंस्त्ताम्म्रायं
चारुणायंचुनमंः शुङ्गवें ॥ ३९ ॥ नमंः शुङ्गवें । चपशुपतं
येचुनमंऽउुग्ग्रायंचभीमायंचुनमोंग्ग्रेवुधायंचदूरेवुधायंचुन
मोंहुन्त्रेचहनींयसेचुनमोंव्वृक्षेब्भ्योहरिंकेशेब्भ्योनमंस्त्तारायं ॥१६७॥
॥ ४० ॥ [ ४-६ ] नमंः शम्भुवायं । चमयोभुवायंचुनमंः श

ङ्कुरायचमयस्कुरायचनमःशिवायचशिवतरायच ॥ ४१ ॥
[१-७] नमःपार्याय । चावार्यायचनमःप्रतरणायचोत्तर
णायचनमस्तीर्थ्यायचकूल्यायचनमःशष्प्यायचफेन्याय
चनमःसिकत्याय ॥ ४२ ॥ नमःसिकत्याय । चप्रवाह्याय
चनमःकिᳬशिलायचक्षयणायचनमःकपर्दिनेचपुलस्तये
चनमऽइरिण्यायचप्रपथ्यायचनमोव्व्रज्याय ॥ ४३ ॥ नमो
व्व्रज्याय । चगोष्ठ्यायचनमस्तल्प्यायचगेह्यायचनमोहृद

य्यायचनिवेष्प्यायचनमःकाट्यायचगह्वरेष्ठायचनमःशु
ष्क्याय ॥ ४४ ॥ नमःशुष्क्याय । चहरित्यायचनमः
पाꣳसव्यायचरजस्यायचनमोलोप्यायचोलप्यायचनम
ऊर्व्यायचसूर्व्यायचनमःपर्णाय ॥ ४५ ॥ नमःपर्णाय ।
चपर्णशदायचनमऽउद्गुरमाणायचाभिघ्नतेचनमऽआखिदते
चप्रखिदतेचनमऽइषुकृद्भ्योधनुष्कृद्भ्यश्चवोनमोनमोव
ःकिरिकेभ्योदेवानाꣳहृदयेभ्योनमोविचिन्वत्केभ्योनमो

व्विक्षिणत्त्केब्भ्योनमंऽआनिर्हृतेब्भ्यं॑÷ ॥ ४६ ॥ [५-८]
द्द्रापेऽअन्धंसः ॥ द्द्रापेऽअन्धंसस्प्पतेदरिंद्द्रनीलंल्लोहित ॥
आसाम्प्प्रजानामेषाम्पंशूनाम्माभेर्म्मारोङ्मोचंनःकिञ्चनामं
मत् ॥ ४७ ॥ इमारुद्द्राय । तवसेकपर्द्दिनेंक्क्षयद्वीरा
युप्प्रभंरामहेमतीः ॥ यथाशमसंद्द्विपदेचतुंष्प्पदेव्विश्श्वंम्पुष्ट
ङ्ग्रामेऽअस्म्मिन्नंनातुरम् ॥ ४८ ॥ याते । रुद्द्रशिवा

सं. २९ तनूःशिवाव्विश्श्वाहाभेषजी ॥ शिवारुतस्यंभेषजीतयानोम्मृड

जीवसे ॥ ४९ ॥ परिनह ॥ परिणोरुद्रस्यहेतिर्वृणक्तुपरित्त्वेष
स्यंदुर्म्मतिरंघायोः ॥ अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तो
कायतनयायमृड ॥ ५० ॥ मीढुष्टमशिवतम । शिवोनःसुम
नाभव ॥ परमेवृक्षऽआयुधन्निधायकृत्तिंवसानऽआचरपिनाक
म्बिभ्रदागहि ॥ ५१ ॥ विकिरिद्रविलोहित ॥ विकिरिद्रवि
लोहितनमस्तेऽअस्तुभगवह॥ यास्तेसहस्रंहेतयोन्न्यमस्म
न्निवपन्तुताः ॥ ५२ ॥ सहस्राणिसहस्रशः ॥ सहस्राणिसह ॥१६९॥

स्त्रशोबाह्वोस्त्तवंहेतयः ॥ तासामीशानोभगवःपराचीनामु
खांकृधि ॥ ५३ ॥ असंङ्ख्यातासहस्त्राणि ॥ असंङ्ख्यातासह
स्त्राणियेरुद्राऽअधिभूम्म्याम् ॥ तेषांᳬंसहस्त्रयोजनेवधन्वानि
तन्मसि ॥ ५४ ॥ अस्मिन्महति । अस्मिन्महत्त्यर्ण्णवे
न्तरिक्षेभवाऽअधि ॥ तेषांᳬंसहस्त्रयोजनेवधन्वानितन्मसि
॥ ५५ ॥ नीलग्ग्रीवाःशितिकण्ठाः ॥ नीलग्ग्रीवाःशितिकण्ठा
दिवᳬंरुद्राऽउपश्रिताः ॥ तेषांᳬंसहस्त्रयोजनेवधन्वानित

न्मसि ॥ ५६ ॥ नीलग्ग्रीवाःशितिकण्ठाः । शुर्वाऽअधः
क्षमाचुराः ॥ तेषांᳬसहस्त्रयोजुनेवुधन्वांनितन्मसि ॥ ५७ ॥
येवृक्षेषु । शुष्पिञ्जंरानीलग्ग्रीवाुविलोंहिताः ॥ तेषांᳬसहस्त्र
योजुनेवुधन्वांनितन्मसि ॥ ५८ ॥ येभूतानाम् ॥ येभूताना
मधिपतयोविशिखासंःकपुर्द्दिनंः ॥ तेषांᳬसहस्त्रयोजुनेवुध
न्वांनितन्मसि॥५९॥येपुथाम्॥येपुथाम्पंथिरक्षंयऽऐलबृदाऽ ॥१७०॥
आंयुर्युधंः ॥ तेषांᳬसहस्त्रयोजुनेवुधन्वांनितन्मसि ॥ ६० ॥

येतीर्त्थानि । प्प्रचरन्तिसृकाहस्त्तानिषङ्गिणः ॥ तेषाᳪंसह
स्स्रयोजनेवधन्न्वानितन्न्मसि ॥ ६१ ॥ येन्नेषु । व्विविद्ध्यन्तिपा
त्रेषुपिबतोजनान् ॥ तेषाᳪंसहस्स्रयोजनेवधन्न्वानितन्न्मसि
॥ ६२ ॥ यऽएतावन्तः ॥ यऽएतावन्तश्श्चभूयाᳪंसश्श्चदिशो
रुद्द्रावितस्त्थिरे॥तेषाᳪंसहस्स्रयोजनेवधन्न्वानितन्न्मसि॥६३॥
नमोस्तु । रुद्द्रेब्भ्योयेदिवियेषांव्वर्षमिषवः ॥ तेब्भ्योदशप्प्रा
चीर्द्दशदक्षिणादशप्प्रतीचीर्द्दशोदीचीर्द्दशोर्द्ध्वाः ॥ तेब्भ्योन

मोऽअस्त्तुतेनोंवन्तुतेनोंमृडयन्तुतेयन्द्विष्म्मोयश्चंनोद्वेष्टितमे
षाञ्जम्भेदद्ध्मः ॥६४॥ नमोंस्त्तु । रुद्द्रेब्भ्योयेन्तरिक्क्षेयेषां
व्वातऽइषवः॥ तेब्भ्योदशप्प्राचीर्दशदक्क्षिणादशप्प्रतीचीर्दशो
दीचीर्दशोर्द्ध्वाः ॥ तेब्भ्योनमोऽअस्त्तुतेनोंवन्तुतेनोंमृडयन्तुते
यन्द्विष्म्मोयश्चंनोद्वेष्टितमेषाञ्जम्भेदद्ध्मः ॥६५॥ नमोंस्त्तु।
रुद्द्रेब्भ्योयेपृथिव्व्याँऽयेषामन्नमिषवः ॥ तेब्भ्योदशप्प्राचीर्दशं ॥१७१॥
दक्क्षिणादशप्प्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः॥तेब्भ्योनमोऽअस्त्तु

तेनोऽवन्तुतेनोऽमृडयन्तुतेयन्द्विष्म्मोयश्चनो द्वेष्टितमेषाञ्जम्भेद
द्ध्मः ॥ ६६ ॥ [ २०-९ ] इतिश्रीवाजसनेयसंहितायांषोडशोऽ
ध्यायः ॥ १६ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥
अश्मन्नूर्ज्जंदश, नमस्तेपञ्च, ग्निस्तिग्मेननव, चक्षुषःपिताष्टा,
वाशुःशिशानःसप्तदशो, देवंकमध्वमाग्निनापञ्चदशकौ, शुक्र
ज्योतिश्चसप्त, मꣳस्तनंत्रयोदश, नवैकोनशतं [ मं. ९९
अ. १७ अनु. ९ ] ॥ हरिःॐ ॥ अश्मन्नूर्ज्जम् ॥ अश्मन्नू

र्ज्जम्पर्व्वतेशिश्श्रियाणामुद्भ्द्भ्यऽओषधीब्भ्योव्वनस्प्पतिब्भ्योऽ
अधिसम्भृतम्पयः ॥ तान्नऽइषमूर्ज्जन्धत्तमरुतः सᳬं रराणाऽ
अश्म्मँस्त्तेक्षुन्मयितऽऊर्ग्यन्द्विष्म्मस्त्तन्तेशुगृच्छतु ॥ १ ॥
इमामे । ऽअग्नऽइष्टकाधेनवः सन्त्वेकाचदशचदशचशतञ्च
शतञ्चसहस्रञ्चसहस्रञ्चायुतञ्चायुतञ्चनियुतञ्चनियुतञ्चप्रयुत
ञ्चार्बुदञ्चन्यर्बुदञ्चसमुद्रश्चमध्यञ्चान्तश्चपरार्द्धश्चैतामेऽअग्नऽ ॥१७२॥
इष्टकाधेनवः सन्त्वमुत्रामुष्मिँल्लोके ॥२॥ ऋतवस्थ । ऽऋता

वृधंऽऋतुष्ठास्त्थंऽऋतावृधं ॥ घृतश्श्चुतौमधुश्चुतौव्विराजोनाम

कामदुघाऽअक्क्षीयमाणाः ॥३॥ समुद्रस्यंत्त्वा॥समुद्रस्यत्त्वावं

कयाग्नेपरिंव्ययामसि ॥ पावकोऽअस्म्मब्भ्यंᳬ शिवोभंव ॥४॥

हिमस्यंत्त्वा । जरायुणाग्नेपरिंव्ययामसि ॥ पावकोऽअस्म्म

ब्भ्यंᳬ शिवोभंव ॥५॥ उपज्ज्मन् ॥ उपज्ज्मन्नुपंवेतसेवंतरनदी

ष्ष्वा ॥ अग्नेपित्तमपामंसिमण्डूकिताभिरागंहिसेमन्नोयज्ञ

म्पांवकवंर्ण्णᳬ शिवङ्कृधि ॥६॥ अपामिदम् ॥ अपामिदन्न्ययंनᳬ

समुद्रस्यंनिवेशंनम् ॥ अन्याँस्त्तेऽअस्म्मत्त्तंपन्तुहेतयंः पाव
कोऽअस्म्मभ्यंᳯशिवोभंव ॥ ७ ॥ अग्ग्नेपावक । रोचिषां
मन्द्रयांदेवजिह्वया ॥ आदेवान्वंक्षियक्षिच ॥ ८ ॥ सनंः
पावकदीदिवोग्ग्नेदेवाँ २ ॥ इहावंह ॥ उपंयज्ञᳯहविश्चंनः
॥ ९ ॥ पावकयायः ॥ पावकयायाश्चितयंन्त्याकृपाक्षामंत्रु
रुचऽउषसोनभानुनां ॥ तूर्वन्नयामन्नेतंशस्यनूरणऽआयोघृणे
नतंतृषाणोऽअजरंः ॥ १० ॥ [ १०-१ ] नमंस्त्ते ॥ नमं

॥१७३॥

स्त्तेहरंसेशोचिषेनमंस्त्तेऽअस्त्वर्च्चिषे ॥ अन्न्याँस्त्तेऽअस्म्मत्तं
पन्तुहेतयं÷पावकोऽअस्म्मब्भ्यं६शिवोभंव ॥ ११ ॥ नृषदे
वेट्॥ नृषदेव्वेडंप्सुषदेव्वेड्बर्हिषदेव्वेड्वनसदेव्वेट्स्वर्व्विदेवेट् ॥१२॥
येदेवा॰ ॥ येदेवादेवानाँय्यज्ञियांयज्ञियांनाउंसंवत्त्सरीणमु
पंभागमासंते ॥ अहुतादोहविषोयज्ञेऽअस्म्मिन्त्स्वयम्पिबन्तु
मधुनोघृतस्यं ॥ १३ ॥ येदेवा॰ ॥ येदेवादेवेष्ष्वधिदेवत्त्व
मायन्न्येब्रह्मणं÷पुरऽएतारोऽअस्य ॥ येब्भ्योनऽऋतेपवंतेधाम

किञ्चनन्तेदिवोनपृथिव्याऽअधिस्नुषु ॥ १४ ॥ प्राणदाऽअ
पानदाः ॥ प्राणदाऽअपानदाव्यानदावर्चोदावरिवोदाः ॥
अन्याँस्तेऽअस्मत्तपन्तुहेतयंःपावकोऽअस्मभ्यंशिवो
भव ॥ १५ ॥ [५-२] अग्निस्तिग्मेन । शोचिषायासद्वि
श्वन्न्यत्त्रिणंम् ॥ अग्निर्नोवनतेरयिम् ॥ १६ ॥ यऽइमा ।
विश्वाभुवंनानिजुह्वदृषिर्होतान्न्यसीदत्पितानंः ॥ सऽआशि

१ अग्निस्तिग्मेन । अत्र विसर्गस्य सत्वे कृते "वायुरग्निरग्नेरेकाक्षरे" (शु. य. प्रा. ३ अ. ७७ सू.) इत्यनेन अग्निशब्दात्परस्य सस्य षत्वं न । अग्नेः परस्य तिग्मशब्दस्य एकाक्षराभावात् ।

षाद्द्रविणमिच्छमानः प्प्रथमच्छदवराँ२॥ऽआविवेश ॥ १७ ॥
किंस्वित् ॥ किंस्विदासीदधिष्ठानंमारम्भंणङ्कतमत्स्वि
त्कथासीत् ॥ यतोभूमिञ्जनयंन्विश्वकंर्म्मार्ब्विद्यामौण्णौन्म
हिनाव्विश्वचंक्क्षाः॥ १८॥ व्विश्वतंश्चक्क्षुरुत । व्विश्वतौमुखो
व्विश्वतौबाहुरुतव्विश्वतंस्प्पात् ॥ सम्बाहुब्भ्यान्धमंतिसम्पतं
त्रैर्द्यावाभूमींजनयंन्देवऽएकंः॥ १९॥ किंस्वित् ॥ किं
सं. ३० स्विद्वनङ्कऽउसब्वृक्षऽआंसयतोद्यावांपृथिवीनिष्टतक्क्षुः॥ मनी

षिणोमनंसापृच्छतेदुतद्यदुध्यातिंष्ठुद्धुवंनानिधारयंन् ॥ २० ॥
सातें ॥ यातेधामानिपरमाणियावमायामंद्ध्यमाविंश्वकर्म्मन्नु
तेमा ॥ शिक्क्षासखिंब्भ्योहुविषिंस्वधावःस्वयँय्यंजस्वतुन्वंवृ
धानः ॥ २१ ॥ विश्वंकर्मन्हुविषा । वावृधानःस्वयँय्यंजस्व
पृथिवीमुतद्याम् ॥ मुह्यन्त्वन्येऽअभितःसपत्नांऽइहास्म्मा
कंम्मघवांसूरिरंस्तु ॥ २२ ॥ वाचस्पतिम् ॥ वाचस्पतिंवि ॥ १७५ ।
श्वकंर्म्माणमूतयेंमनोजुवंवाजेंऽअद्याहुवेम ॥ सनोविश्वांनि

ह॒वंनानिजोषह्ह्रि॒श्श्वशंम्भुरवंसेसा॒धुकंम्मर्मा ॥ २३ ॥ व्विश्श्वंक
म्र्मन्हहु॒विषां ॥ व्विश्श्वकम्र्मन्हहु॒विषा॒व्वर्द्धनेनत्रा॒तार॒मिन्द्रंमकृणो
रव॒द्धयम् ॥ तस्म्मै॒व्विश॒ःसमंनमन्तपू॒र्व्वीर॒यमु॒ग्रोव्वि॒हव्यो॒य
थासंत् ॥ २४ ॥ [ ९-३ ] चक्क्षुंषःपि॒ता । मनंसा॒हिधीराघृ
तमैनेऽअजन॒न्नम्म्नंमाने ॥ य॒देदन्ता॒ऽअदंदहन्त॒पूर्व्व॒ऽआदि
द्यावांपृथि॒वीऽअंप्प्रथेताम् ॥ २५ ॥ व्विश्श्वकंम्म॒र्र्ा॒व्विमंनाः ॥ व्वि
श्श्वकंम्म॒र्र्ा॒व्विमंना॒ऽआद्विहांयाधा॒ताव्विंधा॒तापंर॒मोतस॒न्दृक् ॥

तेषांमिष्टानिसमिषामंदन्तियंत्रांसप्तऽऋषीन्परऽएकंमाहुः
॥ २६ ॥ योनंः । पिताजंनितायोविधाताधामांनिवेदुभुवंना
निविश्वां ॥ योदेवानांन्नामधाऽएकंऽएवतꣳसंम्प्रश्नम्भुवंना
यन्त्यन्न्या ॥ २७ ॥ तऽआयंजन्तद्रविंणꣳसमंस्म्माऽऋषंयःपू
र्वेजरितारोनभूना ॥ असूर्त्तेसूर्त्तेरजंसिनिषत्तेयेभूतानिसमकृ
ण्वन्निमानि ॥ २८ ॥ परोदिवा । परऽएनापृथिव्व्यापरोदेवेभि

१ यत्रासप्तऽऋषीन् । अत्र सप्तऋषीन् परे यत्रशब्दस्य ह्रस्वाकारस्य "नरस्सप्तऋषीन्०" (शु. य. प्रा. ३ अ. १२२ सू.) इत्यनेन दीर्घः ।

रसुरैर्य्य[1]दस्ति ॥ कꣳस्विद्गर्भम्प्रथमन्दध्रऽआपोयत्रदेवाः
समपश्श्यन्तपूर्व्वे ॥ २९ ॥ तमित् ॥ तमिद्गर्भम्प्रथमन्द
ध्रऽआपोयत्रदेवाः समगच्छन्तव्विश्श्वे ॥ अजस्यनाभावध्येकम
र्पितँयस्मिन्व्विश्श्वानिभुवनानितस्थुः ॥ ३० ॥ नतम् ॥
नतंव्विदाथयऽइमाजजानान्यद्युष्म्माकमन्तरम्बभूव ॥ नी
हारेणप्प्रावृताजल्प्प्याचासुतृपऽउक्थशासश्चरन्ति ॥ ३१ ॥

---

१ अत्र परं तु रेफहकाराभ्याम् (शु. य. प्रा. ४ अ. १०१ सू.) इत्यनेन रकारात्परस्य यकारस्य द्वित्वम् ।

वि॒श्वक॑र्म्मा॒हि ॥ वि॒श्वक॑र्म्मा॒ह्यज॑नि॒ष्ट दे॒वऽआदिद्ग॑न्ध॒र्व्वोऽ
अ॑भवद्द्वि॒तीय॑÷ ॥ तृ॒तीय॑÷पि॒ताज॑नि॒तौष॑धीनामु॒पाङ्ग॑र्भं
व्यद॑धात्पुरु॒त्रा ॥ ३२ ॥ [८-४] आ॒शुः॒शिशा॑नः ॥
आ॒[1]शुः॒शिशा॑नो वृ॒ष॒भो न भी॒मो घ॑नाघ॒नः क्षोभ॑णश्चर्षणी॒नाम् ॥
स॒ङ्क्रन्द॑नो नि॒मि॒षऽए॑कवी॒रः श॒तꣳसेना॑ऽअजयत्सा॒कमिन्द्र॑÷
॥ ३३ ॥ स॒ङ्क्रन्द॑नेनानि॒मि॒षेण॑ । जि॒ष्णुना॑यु॒त्का॒रेण॑

१ "आशुःशिशानः" इत्यत्र "प्रत्ययसवर्णं मुदि शाकटायनः" (शु. य. प्रा. ३ अ. ९ सू.) इत्यनेन मुत्संज्ञकेषु शषसान्यतरवर्णपरेषु विसर्जनीयस्य परसवर्णे शकारे प्राप्ते "अविकारं शाकल्यः शषसेषु" (शु. य. प्रा. ३ अ. १० सू.) इत्यनेन परसवर्णो निषिध्यते । एतादृशेष्वन्यस्थलेष्वेवमेव निषेधो ज्ञेयः ।

दुश्च्यवनेनधृष्णुना ॥ तदिन्द्रेणजयततत्त्सहद्ध्वँ॒युधोनरऽ
इषुंहस्त्तेनवृष्णणा ॥ ३४ ॥ सऽइषुंहस्त्तैः ॥ सऽइषुंह
स्त्तैःसनिषङ्गिभिर्व्वशीस७ᳬस्रष्टासयुधऽइन्द्रोगणेन ॥ स७ᳬसृष्ट
जित्त्सोमपाबाहुशर्द्ध्युँग्ग्रधन्न्वाप्प्रतिहिताभिरस्त्ता ॥ ३५॥ बृह
स्प्पतेपरि । दीयारथेनरक्षोहामित्रा२ँ॥ऽअपबाधमानः ॥
प्रभञ्जन्त्सेनाःप्प्रमृणोयुधाजयन्नस्म्माकमेद्ध्यविताारथानाम्
॥ ३६ ॥ बलविज्ञायस्त्थविरः ॥ बलविज्ञायस्त्थविरःप्प्रवीरः

सहंस्वान्वाजीसहंमानऽउग्रः ॥ अ[1]भिवीरोऽअ[2]भिसंत्त्वासहो
जाजैत्रंमिन्द्ररथमातिष्ठगोवित् ॥ ३७ ॥ गोत्रभिदंङ्गोविदंम् ॥
गोत्रभिदंङ्गोविदंवज्रंबाहुञ्जयंन्तमज्मंप्रमृणन्तमोजंसा ॥
इमᳬसंजाताऽअनुंवीरयद्ध्वमिन्द्रंᳬसखायोऽअनुसᳬरंभद्ध्वम्
॥ ३८ ॥ अभिगोत्राणिं ॥ अभिगोत्राणिसहंसागाहंमानोऽ



१ अभिवीरः । अत्र "अश्वरश्मि०" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वकारे परे अभि इत्यस्य ह्रस्वेकारस्य दीर्घेकारे प्राप्ते "अभिविख्येपंवीरं०" (शु. य. प्रा. ३ अ. १०० सू.) इत्यनेन वीरपरे अभेर्दीर्घनिषेधः । २ अभिसत्त्वा । अत्र "भाविभ्यः सः षं समानपदे" (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन सस्य षत्वे प्राप्ते "अनुसन्तनोतुबृहस्पतिसुतस्य सुसमिद्धायसुसन्दृशमभिसत्त्वा" (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन प्रकृतिभावे षत्वाभावः ।

योव्वीरश्शतमन्न्युरिन्द्रः ॥ दुश्च्यवनश्पृतनाषाडयुद्ध्योस्म्मा
कङ्सेनाऽअवतुप्प्रयुत्त्सु ॥ ३९ ॥ इन्द्रऽआसाम् ॥ इन्द्रऽ
आसान्नेताबृहस्प्पतिर्द्दक्षिणायज्ञश्पुरऽएतुसोमः ॥ देवसेना
नामभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्वग्ग्रम् ॥ ४० ॥
इन्द्रस्यवृष्ष्णः ॥ इन्द्रस्यवृष्ष्णोव्वरुणस्यराज्ञऽआदित्यानां
म्मरुताꣳशर्द्धऽउग्ग्रम् ॥ महामनसाम्भुवनच्च्यवानाङ्घोषोदे
वानाञ्जयतामुदस्त्थात् ॥ ४१ ॥ उद्धर्षय । मघवन्नायुधा

न्न्युत्सत्त्वंनाम्मामकानाम्मनांᳬसि ॥ उद्वृत्रहन्वाजिनांव्वाजि
नान्न्युद्रथांनाञ्जयंताँᳬयन्तुघोषाः ॥ ४२ ॥ अस्म्माकमि
न्द्रः ॥ अस्म्माकमिन्द्रःसमृतेषुद्ध्वजेष्ष्वस्म्माकँय्याऽइषव
स्त्ताजंयन्तु ॥ अस्म्माकंव्वीराऽउत्तरेभवन्त्वस्म्माँ२॥ऽउंदेवाऽ
अवताहवेषु ॥ ४३ ॥ अमीषांञ्चित्तम् ॥ अमीषांञ्चित्तम्प्रति
लोभयंन्तीगृहाणाङ्गांन्यप्प्वेपरेहि ॥ अभिप्प्रेहिनिर्दहहृत्त्सु
शोकैरन्धेनामित्त्रास्त्तमंसासचन्ताम् ॥ ४४ ॥ अवंसृष्टापरा ।

पतशरव्येब्रह्मसंशिते ॥ गच्छामित्रान्प्रपद्यस्वमामीषाङ्क
ञ्चनोच्छिषः ॥ ४५ ॥ प्रेतं ॥ प्रेताजयतानरऽइन्द्रोवःशर्म्म
यच्छतु ॥ उग्रावः सन्तुबाहवोनाधृष्ष्यायथासथ ॥ ४६ ॥
असौया । सेनामरुतःपरेषामभ्यैतिनऽओजसास्पर्द्धमाना ॥
ताङ्गूहततमसापव्रतेनयथामीऽअन्योऽअन्यन्नजानन् ॥ ४७ ॥
यत्रबाणाः । सम्पतन्तिकुमाराविशिखाऽइव ॥ तन्नऽइन्द्रोबृह

१ प्रेताजयतानरः । अत्र जयतशब्दस्य ह्रस्वाकारस्य "धारयामयोजाव" (शु. य. प्रा. ३ अ. १०८ सू.) इत्यनेन नकारे परे दीर्घाकारः ।

स्प्पतिरदितिꣳशर्म्मयच्छतुव्वि[1]श्वाहाशर्म्मयच्छतु ॥ ४८ ॥ मर्म्मा
णिते ॥ मर्म्माणितेव्वर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानु
वस्ताम् ॥ उरोर्व्वरीयोव्वरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु
॥ ४९ ॥ [ १७-५ ] उदेनम् ॥ उदेनमुत्तरान्नयाग्नेघृतेनाहुत ॥
रायस्प्पोषेणसꣳसृजप्प्रजयाचबहुङ्कृधि ॥ ५० ॥ शतम् ॥ ९०० ॥
इन्द्रेमम् ॥ इन्द्रेमम्प्प्रतरान्नयसजातानामसद्वशी ॥ समेनंव्व
र्च्चसासृजदेवानाम्भागदाऽअसत् ॥ ५१ ॥ यस्यकुर्म्मः ॥



१ विश्वाहा। अत्र नरहामित्रेषु च (शु. य. प्रा. ३ अ. १०३ सू.) इत्यनेन हा परे विश्वशब्दस्य ह्रस्वाकारस्य दीर्घाकारः।

यस्यंकुम्म्मोंगृहेहुविस्त्तमंग्ग्नेवर्द्धयात्त्वम् ॥ तस्म्मैदेवाऽअधिब्र
वन्नयञ्च्चब्रह्मणस्प्पतिः ॥ ५२ ॥ उदुत्त्वा ॥ उदुत्त्वाव्विश्श्वे
देवाऽअग्ग्नेभरंन्तुचित्तिभिः ॥ सनोंभवशिवस्त्त्वꣳसुप्प्रतीको
व्विभावसुः ॥ ५३ ॥ पञ्चदिशः ॥ पञ्चदिशोदैवीर्य्यज्ञमंव
न्तुदेवीरपामंतिन्दुर्म्मतिम्बाधमानाः ॥ रायस्प्पोषेयज्ञपंतिमा
भजंन्तीरायस्प्पोषेऽअधियज्ञोऽअंस्त्थात् ॥ ५४ ॥ समिद्धेऽअ
सं. ३१ ग्नौ॥समिद्धेऽअग्ग्नावधिमामहानऽउक्थपंत्त्रऽईड्योगृभीतः॥

तप्स्तङ्घर्म्मम्परिगृह्यायजन्तोर्ज्जायद्यज्ञमयजन्तदेवाः ॥ ५५ ॥
दैव्यायधर्त्रे । जोष्ट्रेदेवश्रीःश्रीमनाःशतपयाः ॥ परिगृह्यदे
वायज्ञमायन्देवादेवेभ्योऽअध्वर्य्यन्तोऽअस्थुः ॥ ५६ ॥
वीतँहविः । शमितँशमितायजध्यैतुरीयोयज्ञोयत्रहव्यमे
ति ॥ ततोवाकाऽआशिषोनोजुषन्ताम् ॥ ५७ ॥ सूर्य्यर
श्मिर्हरिकेशः । पुरस्तात्सविताज्योतिरुदयाँ२ ॥ऽअजस्रम् ॥ 
तस्यपूषाप्रसवेयातिविद्वान्त्सम्पश्यन्विश्वाभुवनानिगोपाः

॥ ५८ ॥ व्विमानंऽएषः ॥ व्विमानंऽएषदिवोमद्ध्यंऽआस्त्तऽ
आपप्प्रिवान्रोदंसीऽअन्तरिक्षम् ॥ सव्विश्श्वाचीरभिचंष्ट्टेघृताची
रन्तरापूर्व्वमपरञ्चकेतुम् ॥ ५९ ॥ उक्क्षासंमुद्रः ॥ उक्क्षासंमु
द्द्रोऽअंरुणःसुंपर्ण्णःपूर्व्वस्स्ययोनिम्पितुराविंवेश ॥ मद्ध्येदिवोनि
हिंतम्पृश्श्निरश्म्माव्विचंक्क्रमे¹रजंसस्प्पात्त्यन्तौ ॥ ६० ॥ इन्द्रं
व्विश्श्वाः ॥ इन्द्रंव्विश्श्वाऽअवीवृधन्त्समुद्रव्यंचसङ्गिरंः ॥ रथी

१ रजसस्पात्यन्तौ इति पदं "अध्वनो रजसो रिषः स्पृशस्पातौ" (शु. य. प्रा. ३ अ. २८ सू.) इत्यनेन रजसपरस्य विसर्जनीयस्य पाति पदे परे सकारे रूपम्।

तेमꣳरथीनांव्वाजानाꣳसत्पंतिम्पतिम् ॥ ६१ ॥ देवहूर्यज्ञः ॥
देवहूर्यज्ञऽआचंव्वक्षत्सुम्नहूर्यज्ञऽआचंव्वक्षत् ॥ यक्षंद
ग्निर्देवोदेवाँ२॥ऽआचंव्वक्षत् ॥ ६२॥ व्वाजंस्यमा । प्प्रसवऽ
उद्ग्राभेणोदंग्ग्रभीत् ॥ अधांसपत्नानिन्द्रोमेनिग्ग्राभेणाधंराँ
२॥ऽअकः ॥ ६३ ॥ उद्ग्राभञ्च । निग्ग्राभञ्चब्रह्मदेवाऽअंवी
वृधन् ॥ अधांसपत्नानिन्द्राग्नीमेंव्विषूचीनान्व्यस्यताम् ॥ ६४॥
[१५-६] क्रमंध्वमग्निनां ॥ क्रमंध्वमग्निनानाकमुख्यꣳ

हस्त्तेषुबिब्भ्रतः ॥ दिवस्पृष्ठꣳस्वर्गत्वामिश्श्रादेवेभिराद्धम् ॥ ६५ ॥ प्राचीमनु । प्प्रदिशम्प्रेहिविद्वानग्ग्नेरग्ग्नेपुरोऽअग्निर्भवेह ॥ व्विश्श्वाऽआशादीद्यानोव्विभाह्यूर्ज्जन्नोधेहिद्विपदेचतुष्पदे ॥ ६६ ॥ पृथिव्याऽअहम् ॥ पृथिव्याऽअहमुदन्तरिक्षमारुहमन्तरिक्क्षाद्दिवमारुहम् ॥ दिवोनाकस्यपृष्ठात्त्स्वर्ज्ज्योतिरगामहम् ॥ ६७ ॥ स्वर्य्यन्तः ॥ स्वर्य्यन्तोनापेक्क्षन्तऽआद्याꣳरोहन्तिरोदसी ॥ यज्ञँय्येव्विश्श्वतोधारꣳसुविद्वाꣳसो

व्वितेनिरे ॥ ६८ ॥ अग्ग्नेप्प्र ॥ अग्ग्नेप्प्रेहिंप्प्रथमोदेवयताञ्चक्क्षु
र्देवानांमुतमर्त्त्यानाम् ॥ इयंक्क्षमाणाभृगुभिᳲसजोषाᳲस्वर्य्य
न्तुयजमानाᳲस्वस्त्ति ॥ ६९ ॥ नक्तोषासा ॥ नक्तोषासास
मनसाव्विरूपेधापयेतेशिशुमेकᳲसमीची ॥ द्यावाक्क्षामारु
क्क्मोऽअन्तर्व्विभातिदेवाऽअग्ग्निन्धारयन्द्रविणोदाः ॥ ७० ॥
अग्ग्नेसहस्राक्क्ष । शतमूर्द्धञ्छतन्तेप्प्राणाःसहस्रंव्यानाः ॥
त्वᳲसाहस्रस्यरायऽईशिषेतस्म्मैतेव्विधेमव्वाजायस्वाहा॥७१॥

सुपर्णोऽसि । गुरुत्मान्पृष्ठे पृथिव्याः सीद ॥ भासान्तरिक्ष
मापृण ज्योतिषा दिवमुत्तभान तेजसा दिश उद्दृꣳह ॥७२॥
आजुह्वानः सुप्रतीकः । पुरस्तादग्ने स्वं योनिमासीद साधु
या ॥ अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वे देवा यजमान
श्च सीदत ॥ ७३ ॥ ताꣳ सवितुः ॥ ताꣳ सवितुर्वरेण्यस्य चि
त्रामाहं वृणे सुमतिं विश्वजन्याम् ॥ यामस्य कण्वो अदुहत्प्र
पीनाꣳ सहस्रधारां पयसा महीं गाम् ॥ ७४ ॥ विधेम ते ।

परमेजन्म॑न्नग्नेविधेमुस्तोमै॑रवरेसुधस्थे॑ ॥ यस्म्माद्योनेरुदा
रिथ्रुायजेतम्प्रत्त्वेहुवीᳫं॑षिजुहुरेसमिद्धे ॥ ७५ ॥ प्रेद्धोऽ
अग्ने ॥ प्रेद्धोऽअग्नेदीदिहिपुरोनोजंस्त्रयासूर्म्यायविष्ठ ॥
त्वाᳫं॑शश्वंन्तऽउपयन्तिवाजाः॑ ॥ ७६ ॥ अग्नेतम् ॥
अग्नेतमुद्याश्श्वन्नस्तोमैः॑क्रतुन्नभुद्रᳫं॑हृदिस्पृशम् ॥ ऋध्यामा
तऽओहैः॑ ॥ ७७ ॥ चित्तिंजुहोमि ॥ चित्तिंजुहोमिमनंसा

१ रिथ यजेतम्। इति पदे। अत्र "अथोदारिथ." (शु. य. प्रा. ३ अ. ११३ सू.) इत्यनेन रिथशब्दस्य यकारे परे दीर्घविधानात् रिथायजेतम्।

घृतेनयथादेवाऽइहागमंव्वीतिहोत्राऽऋतावृधः ॥ पत्त्येव्विश्व
स्यभूमंनोजुहोमिव्विश्वकर्म्मणेव्विश्वाहादाभ्यꣳहविः ॥७८॥
सप्तते । ऽअग्नेसमिधःसप्तजिह्वाःसप्तऽऋषयःसप्तधाम
प्प्रियाणि ॥ सप्तहोत्राःसप्तधात्त्वायजन्तिसप्तयोनीरापृण
स्वघृतेनस्वाहा ॥ ७९ ॥ [१५-७] शुक्रज्ज्योतिश्च । चित्र
ज्ज्योतिश्चसत्त्यज्ज्योतिश्चज्ज्योतिष्म्माँश्च ॥ शुक्रश्चऽऋतपा
श्चात्त्यꣳहाः ॥ ८० ॥ ईदृङ्ङ् ॥ ईदृङ्ङान्न्यादृङ्ङ्सदृङ्ङ्

प्प्रतिसदृङ्ङ्च[1] ॥ मितश्चसम्मितश्चसभराः ॥८१॥ ऋतश्चसत्त्य
श्चध्रुवश्चधरुणश्च ॥ धर्त्ताचविधर्त्ताचविधारयः ॥ ८२ ॥
ऋतजिच्च। सत्त्यजिच्चसेनजिच्चसुषेणश्च ॥ अन्तिमित्रश्चदूरेऽअ
मित्रश्चगणः ॥८३॥ ईदृक्षासऽएतादृक्षासः ॥ ईदृक्षासऽए
तादृक्षासऽऊषुणः सदृक्षासःप्प्रतिसदृक्षासऽ[2]एतन ॥ मिता
सश्चसम्मितासोनोऽअद्यसभरसोमरुतोयज्ञेऽअस्मिन् ॥८४॥



---

१ प्रतिसदङ्ङ्च अत्र "भाविभ्यः सः षं समानपदे" (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन पकारे प्राप्ते "अनुसन्तनोतु" (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन निषिद्ध्यते । २ प्रतिसदृक्षासः । अत्र "भाविभ्यः सः षं समानपदे" (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन मूर्धन्यषत्वापत्तौ "अनुसन्तनोतु" (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन निषेधे न षत्वम् ।

स्वतवाँश्च । प्प्रघासीचंसान्तपनश्चगृहमेधीचं ॥ क्रीडीचंशा
कीचोज्ज्रेषी ॥ ८५ ॥ इन्द्रन्दैवीः ॥ इन्द्रन्दैवीर्व्विशोमरुतो
नुवर्त्मानोभवन्यथेन्द्रन्दैवीर्व्विशोमरुतोनुवर्त्मानोभवन् ॥
एवमिमँय्यजमानन्दैवीश्चविशोमानुषीश्चानुवर्त्मानोभव
न्तु ॥ ८६ ॥ [७-८] इमꣳस्तनम् ॥ इमꣳस्तनमूर्ज्जस्व
न्तन्धयापाम्प्रपीनमग्नेसरिरस्यमद्ध्ये ॥ उत्सञ्जुषस्वमधुमन्त
मर्व्वन्तसमुद्रियꣳसदनमाविशस्व ॥ ८७ ॥ घृतम्मिमिक्षे ।

घृतमंस्ययोनिर्घृतेश्श्रितोघृतंवंस्यधामं ॥ अनुष्ष्वधमावंहमा
दयंस्वस्वाहांकृतंवृषभवक्षिहृव्यम् ॥ ८८ ॥ समुद्रादूर्म्मिः ॥
समुद्रादूर्म्मिर्म्मधुमाँ २॥ऽउदारदुपांᳫंशुनासमंमृतत्त्वमानट् ॥
घृतस्यनामगुह्यँऽयदस्तिजिह्वादेवानांममृतंस्यनाभिंः ॥८९॥
व्वयन्नामं ॥ व्वयन्नामप्प्रब्ब्रंवामाघृतस्यास्म्मिन्त्यज्ञे[1]धांरयामान
मोंभिंः ॥ उपंब्रह्माश्शृणवच्छस्यमानञ्चतुंःश्रृङ्गोवमीद्गौरऽ



१ धारयामानमोभिः। अत्र धारयाम नमोभिः इति पदे। अत्र "धारयाम योजाव" ( शु. य. प्रा. ३ अ. १०८ सू.) इत्यनेन धारयाम इत्यादिपदेभ्यः परे नकारे सति पूर्वह्रस्वाकारस्य दीर्घो भवति। तेन धारयामानमोभिः ।

एतत् ॥ ९० ॥ चत्त्वारिशृङ्गा ॥ चत्त्वारिशृङ्गा[1]त्त्रयोऽअस्य
पा[2]दाद्द्वेशीर्षेसप्तहस्त्तासोऽअस्य ॥ त्त्रिधाबद्धोव्वृषभोरोरवीति
महोदेवोमर्त्याँ२॥ऽआविवेश ॥ ९१ ॥ त्त्रिधाहितम् ॥ त्त्रिधा
हितम्पणिभिर्ग्गुह्यमानङ्गविदेवासोघृतमन्न्वविन्दन् ॥ इन्द्रऽ
एकꣳसूर्य्यऽएकञ्जजानव्वेनादेकꣳस्वधयानिष्ट्[3]तक्क्षुः ॥९२॥
एताऽअर्षन्ति ॥ एताऽअर्षन्तिहृद्यात्त्समुद्राच्छतव्व्रजारिपुणा

१ चत्वारि शृङ्गाणि इति पदे "निशब्दो बहुलम्" (शु. य. प्रा. ३ अ. १८ सू.) इत्यनेन पदान्तीयशृङ्गाणिपदस्य निशब्दस्य लोपः। २ अस्य पादानि इत्यत्रापि "निशब्दो बहुलम्" इत्यनेन पादानिपदस्य निशब्दस्य लोपः। ३ निष्टृतक्षुः अत्र "ततक्षौ" (शु. य. प्रा. ३ अ. ७१ सू.) इत्यनेन ततक्षूत्तरपदे निरुपसर्गस्य विसर्गस्य षकारे "ऊष्मान्तस्थाश्चयश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन ष्टुत्वेन जातस्य टकारस्य द्वित्वम्।

सं. ३२

नावचक्षे ॥ घृतस्यधाराऽअभिचाकशीमिहिरण्ययोव्वेतसोम
॥१८७॥ द्ध्यंऽआसाम् ॥ ९३ ॥ सम्म्यक्स्स्रवन्ति । सरितोनधेनाऽ ॥१७॥
अन्तर्हृदामनसापूयमानाः ॥ एतेऽअर्षन्त्यूर्म्मयोघृतस्यमृगाऽ
इवक्षिपणोरीषमाणाः ॥९४॥ सिन्धोरिवप्प्राद्ध्वने । शूघना
सोव्वातप्प्रमियःपतयन्तियह्वाः ॥ घृतस्यधाराऽअरुषोनव्वाजी
काष्ठाभिन्दन्नूर्म्मिभिःपिन्वमानः ॥ ९५ ॥ अभिप्प्रवन्त ॥ ॥१८७॥
अभिप्प्रवन्तसमनेवयोषाःकल्याण्यःस्मयमानासोऽअग्नि

म् ॥ घृतस्यधाराᳫंसमिधोनसन्तताजुषाणोहर्य्यतिजातवेदाः
॥ ९६ ॥ कन्न्याऽइववहतुम् ॥ कन्न्याऽइववहतुमेतवाऽउऽअ
ञ्ज्यञ्ज्जानाऽअभिचाकशीमि ॥ यत्रसोमःसूयतेयत्रयज्ञोघृत
स्यधाराऽअभितत्पवन्ते ॥ ९७ ॥ अब्भ्यर्षत । सुष्टुतिङ्ग
व्व्यमाजिमस्म्मासुभद्द्राद्द्रविणानिधत्त॥ इमᳫंयज्ञन्नयतदेवता
नोघृतस्यधारामधुमत्पवन्ते ॥ ९८ ॥ धामन्ते ॥ धामन्ते

१ अत्र "परं तु रेफहकाराभ्याम्" (शु. य. प्रा. अ. सू.) इत्यनेन यकारस्य द्वित्वम् । यत्र रेफहकारात्परः स्पर्शवर्णस्तत्र तु "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेनैव द्वित्वं भवति । तथैव यत्र रेफहकाराभ्यां परः स्पर्शातिरिक्तवर्णस्तत्र तु "परं तु रेफहकाराभ्याम्" इत्यनेन द्वित्वम् ।

विश्वम्भुवनमधिश्रितमन्तः समुद्रे हृद्य्यन्तरायुंषि ॥ अपामनी
केसमिथेयऽआभृतस्तमश्याममधुमन्तन्तऽऊर्म्मिम् ॥९९॥
[१३-९]इतिश्रीवाजसनेयसंहितायांसप्तदशोऽध्यायः॥१७॥
श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ वाजः, सत्त्य, मूर्द्धं
चतुष्का, अश्म्मा, ऽग्निस्त्रिका, वंशुः पञ्चै, काचतस्त्रो,
वाजायद्वे, वाजस्यन्वष्टा, ऽऋताषाट्त्रयोदशा, ग्निसुनाज्जिम ॥१८८॥
सप्त, यदाकूता, द्वात्रिंहत्त्यायदशकौ, त्रयोदशसप्तसप्ततिः ॥

[अ. १८ मं. ७७ अनु. १३] हरिः ॐ ॥ व्वाजश्च[1]। मेप्प्रसव
श्च मेप्प्रयतिश्च मेप्प्रसितिश्च मेधीतिश्च मेक्क्रतुश्च मेस्वरश्च मेश्श्लो
कश्च मेश्श्रवश्च मेश्श्रुतिश्च मेज्ज्योतिश्च मेस्वश्च मेयज्ञेनकल्प
न्ताम् ॥१॥ प्राणश्च । मेपानश्च मेव्यानश्च मेसुश्च मेचित्तञ्च मऽ
आधीतञ्च मेव्वाक्च मेमनश्च मेचक्क्षुश्च मेश्श्रोत्रञ्च मेदक्क्षश्च मे
बलञ्च मेयज्ञेनकल्पन्ताम् ॥ २ ॥ ओजश्च । मेसहश्च मऽ

१ अत्र वाजश्च इत्यत्र जकारोत्तरवर्तिनो विसर्जनीयस्य चकारे परे "चछयोः शम्" (शु. य. प्रा. ३ अ. ८ सू.) इत्यनेन शकारे कृते "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन शकारात्परस्य स्पर्शवर्णस्य चकारस्य द्वित्वम्। एवमेतादृशेष्वन्येषु स्थलेषु बोध्यम्।

आत्क्माचंमेतनूश्चंमेशर्म्मंचमेव्वर्म्मंचमेङ्गांनिचमेस्त्थींनिच
मेपरूꣳषिचमेशरींराणिचमऽआयुंश्चमेजराचंमेयज्ञेनंकल्प
न्ताम् ॥ ३ ॥ ज्यैष्ठ्यंञ्च । मऽआधिंपत्त्यञ्चमेमन्न्युश्चंमेभा
मंश्चमेमंश्चमेम्भंश्चमेजेमाचंमेमहिमाचंमेव्वरिमाचंमेप्प्रथि
माचंमेव्वर्षिमाचंमेद्द्राघिमाचंमेव्वृद्धञ्चंमेव्वृद्धिंश्चमेयज्ञेनंकल्प
न्ताम् ॥ ४ ॥ [४-१] सत्त्यञ्चं । मेश्श्रद्धाचंमेजगंच्चमेध
नञ्चमेव्विश्श्वंञ्चमेमहंश्चमेक्क्रीडाचंमेमोदंश्चमेजातञ्चमेजनिष्ष्य ॥१८९॥

माणञ्चमेसुक्कञ्चमेसुकृतञ्चमेयज्ञेनकल्पन्ताम् ॥ ५ ॥ ऋतञ्च ।
मेमृतञ्चमेयक्ष्मञ्चमेनामयच्चमेजीवातुश्चमेदीर्घायुत्त्वञ्चमेन
मित्रञ्चमेभयञ्चमेसुखञ्चमेशयनञ्चमेसूषाश्चमेसुदिनञ्चमेयज्ञे
नकल्पन्ताम् ॥ ६ ॥ यन्ताचं । मेधर्त्ताचमेक्षेमश्चमेधृति
श्चमेविश्वञ्चमेमहश्चमेसंविच्चमेज्ञात्रञ्चमेसूश्चमेप्रसूश्चमेसीरं
ञ्चमेलयश्चमेयज्ञेनकल्पन्ताम् ॥ ७ ॥ शञ्च । मेमयश्चमे
प्रियञ्चमेनुकामश्चमेकामश्चमेसौमनसश्चमेभगश्चमेद्रविण

 

ञ्चमेभुद्रञ्चंमेश्रेयंश्चमेव्वसीयश्चमेयशंश्चमेयुज्ञेनंकल्पन्ताम्
॥ ८ ॥ [४-२] ऊर्क्कं ॥ ऊर्क्कंमेसूनृताचमेपयंश्चमेरसंश्चमेघृ ॥ १८ ॥
तञ्चंमेमधुंचमेसग्धिश्चमेसपीतिश्चमेकृषिश्चमेवृष्टिश्चमेजैत्रं
ञ्चमऽऔद्भिद्यञ्चमेयुज्ञेनंकल्पन्ताम् ॥ ९ ॥ रयिश्च । मेरा
यंश्चमेपुष्टञ्चंमेपुष्टिश्चमेव्विभुचंमेप्रभुचंमेपूर्णञ्चंमेपूर्णतरञ्च
मेकुयंवञ्चमेक्षितञ्चमेन्नञ्चमेक्षुच्चमेयुज्ञेनंकल्पन्ताम्॥१०॥ ॥१९०॥
व्वित्तञ्च । मेव्वेद्यञ्चमेभूतञ्चंमेभविष्यच्चंमेसुगञ्चमेसुपत्थ्य

ञ्चमऽऋद्धञ्चमेऽऋद्धिंश्चमेक्लृप्तञ्चमेक्लृप्तिंश्चमेमतिश्चमेसुमति
श्चमेयज्ञेनंकल्पन्ताम् ॥ ११ ॥ व्रीहयंश्च । मेयवांश्चमेमा
षांश्चमेतिलांश्चमेमुद्गाश्चमेखल्वांश्चमेप्प्रियङ्गवश्चमेणवश्चमे
श्श्यामाकांश्चमेनीवारांश्चमेगोधूमांश्चमेमसूरांश्चमेयज्ञेनंक
ल्पन्ताम् ॥ १२ ॥ [ ४-३ ] अश्म्मांच । मेमृत्तिकाचमे
गिरयंश्चमेपर्व्वताश्चमेसिकताश्चमेव्वनस्प्पतंयश्चमेहिरंण्यञ्चमे

१ नीवाराः । अत्र नि वारहारयोरनवग्रहे ( शु. य. प्रा. ३ अ. १०६ सू. ) इत्यनेन अवग्रहवर्जिते वारहारयोरन्यतरे परे पूर्वो नीत्युपसर्गो दीर्घो भवति । तेन नीवाराः ।

यंश्चमेश्श्यामञ्चमेलोहञ्चमेसीसञ्चमेत्रपुंचमेयज्ञेनंकल्पन्ता
म् ॥ १३ ॥ अग्निश्चं । मऽआपश्चमेवीरुधश्चमऽओषधयश्च
मेकृष्टपच्च्याश्चमेकृष्टपच्च्याश्चमेग्राम्म्याश्चमेपशवऽआरण्ण्या
श्चमेवित्तञ्चमेवित्तिश्चमेभूतञ्चमेभूतिश्चमेयज्ञेनंकल्पन्ताम्
॥ १४ ॥ वसुंच । मेवसतिश्चमेकर्म्मंच ॥ मेशक्तिश्चमेर्त्थश्च
मऽएमश्चमऽइत्याचमेगातिश्चमेयज्ञेनंकल्पन्ताम् ॥ १५ ॥
[३-४] अग्निश्चं । मऽइन्द्रश्चमेसोमश्चमऽइन्द्रश्चमेसविता

चमेऽइन्द्रश्चमे सरस्वती च मऽइन्द्रश्चमे पूषा च मऽइन्द्रश्चमे बृहस्पतिश्च मऽइन्द्रश्चमे यज्ञेन कल्पन्ताम् ॥१६॥ मित्रश्च । मऽइन्द्रश्चमे वरुणश्च मऽइन्द्रश्चमे धाता च मऽइन्द्रश्चमे त्वष्टा च मऽइन्द्रश्चमे मरुतश्च मऽइन्द्रश्चमे विश्वे च मे देवाऽइन्द्रश्चमे यज्ञेन कल्पन्ताम्॥१७॥ पृथिवी च। मऽइन्द्रश्चमेऽन्तरिक्षञ्च मऽइन्द्रश्चमे द्यौश्च मऽइन्द्रश्चमे समाश्च मऽइन्द्रश्चमे नक्षत्राणि च मऽइन्द्रश्चमे दिशश्च मऽइन्द्रश्चमे यज्ञेन कल्पन्ताम्॥१८॥[ ३-५ ]

अꣳशुश्च। मेरश्मिश्च मेदाभ्यश्च मेधिपतिश्च मऽउपाꣳशुश्च मे
न्तर्यामश्च मऽऐन्द्रवायवश्च मे मैत्रावरुणश्च मऽआश्विनश्च मे
प्प्रतिप्प्रस्त्थानश्च मे शुक्रश्च मे मन्थी च मे यज्ञेन कल्प्पन्ताम्॥ १९॥
आग्ग्रयणश्च । मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च मऽऐन्द्राग्न
श्च मे महावैश्वदेवश्च मे मरुत्त्वतीयाश्च मे निष्केवल्यश्च मे सावित्र
श्च मे सारस्वतश्च मे पात्नीवतश्च मे हारियोजनश्च मे यज्ञेन कल्प्प
न्ताम् ॥ २० ॥ स्रुचश्च । मे चमसाश्च मे वायव्यानि च मे द्रोण

कलशश्चमेग्ग्रावाणश्चमेधिषवंणेचमेपूतभृच्चमऽआधवनीयश्च
मेव्वेदिश्चमेबर्हिश्चमेवभृथश्चमेस्वगाकारश्चमेयज्ञेनंकल्पन्ता
म् ॥ २१ ॥ अग्निश्च । मेघर्म्मश्चमेर्कश्चमेसूर्य्यश्चमेप्प्राण
श्चमेश्वमेधश्चमेपृथिवीचमेदितिश्चमेदितिश्चमेद्यौश्चमेङ्गुलयः
शक्करयोदिशश्चमेयज्ञेनंकल्पन्ताम् ॥ २२ ॥ व्रतञ्च । मऽ
ऋतवश्चमेतपश्चमेसंवत्त्सरश्चमेहोरात्रेऽऊर्व्वष्ठीवेबृहद्रथन्तरेच
मेयज्ञेनंकल्पन्ताम् ॥२३॥ [ ५-६ ] एकाचमे । मेतिस्रश्चमेति

स्त्रश्चं मे पञ्चं च मे पञ्च च मे सप्त च मे सप्त च मे नव च मे नव च मऽए
कादश च मऽएकादश च मे त्रयोदश च मे त्रयोदश च मे पञ्चदश च
मे पञ्चदश च मे सप्तदश च मे सप्तदश च मे नवदश च मे नवदश च
मऽएकविꣳशतिश्च मऽएकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे त्र
योविꣳशतिश्च मे पञ्चविꣳशतिश्च मे पञ्चविꣳशतिश्च मे सप्तविꣳ
शतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च मे नवविꣳशतिश्च ॥ १९३ ॥
मऽएकत्रिꣳशच्च मऽएकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च मे यज्ञेन क

ल्पन्ताम् ॥२४॥ चतस्रश्च । मेष्टौचमेष्टौचमेद्वादशचमेद्वादश
चमेषोडश[1]चमेषोडशचमेव्विꣳशतिश्चमेव्विꣳशतिश्चमेचतु
र्व्विꣳशतिश्चमेचतुर्व्विꣳशतिश्चमेष्टाविꣳशतिश्चमेष्टाविꣳशति
श्चमेद्वात्रिꣳशच्चमेद्वात्रिꣳशच्चमेषट्त्रिꣳशच्चमेषट्त्रिꣳशच्चमेच
त्त्वारिꣳशच्चमेचत्त्वारिꣳशच्चमेचतुश्चत्त्वारिꣳशच्चमेचतुश्चत्त्वा
रिꣳशच्चमेष्टाचत्त्वारिꣳशच्चमेयज्ञेनकल्पन्ताम् ॥ २५ ॥

१ षोडशशब्दे षड् दश इति पदद्वयम् । अत्र षड्दशदन्तयोः संख्यावयोऽर्थयोश्च (शु. य. प्रा. ३ अ. ४७ सू.) इत्यनेन षड्शब्दघटितान्त्यवर्णस्य डकारस्य सोपधे ओकारे षो इति कृते ततः परस्य संख्यावाचिनो दशशब्दस्य दकारस्य मूर्द्धन्ये क्रमेण डकारे च कृते षोडश इति ॥

त्र्यविश्च।मेत्र्यवीचमेदित्यवाट्चमेदित्यौहीचमेपञ्चाविश्चमेप
ञ्चावीचमेत्रिवत्सश्चमेत्रिवत्साचमेतुर्यवाट्चमेतुर्यौहीचमे
यज्ञेनकल्पन्ताम्॥ २६ ॥ पष्ठवाट्च॥ पष्ठवाट्चमेपष्ठौहीचमऽ
उक्षाचमेवशाचमऽऋषभश्चमेवेहच्चमेनड्वाँश्चमेधेनुश्चमेयज्ञे
नकल्पन्ताम्॥२७॥ [४-७] वाजायस्वाहा। प्रसवायस्वाहा
पिजायस्वाहाक्रतवेस्वाहावसवेस्वाहाहर्पतयेस्वाहाह्नेमुग्धा ॥१९४॥
यस्वाहामुग्धायवैनꣳशिनायस्वाहाविनꣳशिनऽआन्त्यायना

यस्वाहान्त्यायभौवनायस्वाहाभुवनस्यपतयेस्वाहाधिपतये
स्वाहाम्प्रजापतयेस्वाहा ॥ इयन्तेराण्णिमत्रायंयन्तासियमनऽ
ऊर्ज्जेत्त्वावृष्ट्यैत्त्वाप्प्रजानान्त्वाधिपत्त्याय ॥ २८॥ आयुर्य्य
ज्ञेनं । कल्प्पताम्प्राणोयज्ञेनंकल्प्पताञ्चक्षुर्य्यज्ञेनंकल्प्पताᳬं
श्रोत्त्रंय्यज्ञेनंकल्प्पतांव्वाग्ग्यज्ञेनंकल्प्पताम्मनोयज्ञेनंकल्प्पता
मात्क्मायज्ञेनंकल्प्पताम्ब्रह्मायज्ञेनंकल्प्पताञ्ज्योतिर्य्यज्ञेनंक
ल्प्पताᳬंस्वर्य्यज्ञेनंकल्प्पताम्पृष्ठँय्यज्ञेनंकल्प्पताँय्यज्ञोयज्ञेनं

कल्प्पताम् ॥ स्तोमश्श्च यजुश्श्च ऽऋक्क्च सामं च बृहच्चं रथन्तरञ्च ॥
स्वंर्द्देवा ऽअगन्मामृता ऽअभूम प्प्रजापंतेः प्प्रजा ऽअंभूम वेट्स्वा
हां ॥२९॥ [२-८] व्वाजंस्यनु । प्प्रंसवे मातरंम्महीमदितिन्नाम व्व
चंसा करामहे ॥ यस्यांमिदं व्विश्श्वम्भुवंनमाविवेश तस्यांन्नो देवः
संविता धर्म्मं साविषत् ॥ ३० ॥ व्विश्श्वेऽअद्य । मरुतो व्विश्श्वं ऽऊ
ती व्विश्श्वे भवन्त्वग्नयः समिद्धाः ॥ व्विश्श्वे नो देवा ऽअवसागंमन्तु ॥१९५॥
व्विश्श्वंमस्तु द्द्रविंणं व्वाजो ऽअस्म्मे ॥ ३१ ॥ व्वाजोनः । सप्तप्प्र

दिशश्चतंस्रोवापरावतः॥ व्वाजोनोव्विश्वैर्द्देवैर्द्धनसाताविहाव

तु॥ ३२॥ व्वाजोनः॥ व्वाजोनोऽअद्यप्रसुवातिदानंव्वाजो

देवाँ२॥ऽऋतुभिः कल्पयाति॥ व्वाजोहिमासर्व्वंवीरञ्जजान

व्विश्वाऽआशाव्वाजंपतिर्जयेयम्॥ ३३॥ व्वाजःपुरस्तात्॥

व्वाजःपुरस्तादुतमंद्ध्यतोनोव्वाजोदेवान्हविषाव्वर्द्धयाति॥ व्वा

जोहिमासर्व्वंवीरञ्चकारसर्व्वाऽआशाव्वाजंपतिर्भवेयम्॥ ३४॥

सम्मा। सृजामिपयसापृथिव्याःसम्मासृजाम्म्यद्भिरोषधी

भिं ॥ सोहंव्वाजंᳬसनेयमग्ग्ने ॥ ३५ ॥ पयंः पृथिव्याम् ॥
पयंः पृथिव्याम्पयऽओषधीषुपयोंदिव्युन्तारिंक्षेपयोधाः ॥
पयंस्वतीः प्प्रदिशंः सन्तुमह्यंम् ॥३६॥ देवस्यंत्त्वा । सवितुः
प्प्रंसवेश्श्विनौर्बाहुब्भ्यांम्पूष्णोहस्त्ताब्भ्याम् ॥ सरंस्वत्त्यैव्वा
चोयन्तुर्य्यन्त्रेणाग्ग्नेः साम्म्राज्ज्येनाभिषिंञ्चामि ॥३७॥ [८-९]
ऋताषाडृतधांमा ॥ ऋताषाडृतधांमाग्ग्निर्गन्धर्व्वस्त्तस्यौषंध ॥१९६॥
योप्प्सरसोमुदोनामं ॥ सनंऽइदम्ब्रह्मंक्षत्त्रम्पांतुतस्म्मैस्वाहा

वाड्डाभ्यःस्वाहा ॥ ३८ ॥ सᳫंहितोव्विश्वसामा ॥ सᳫंहितो
व्विश्वसामासूर्य्योगन्धर्व्वस्तस्यमरीचयोप्सरसऽआयुवोनाम॥
सनऽइदम्ब्रह्मक्षत्रम्पातुतस्मैस्वाहावाड्डाभ्यःस्वाहा ॥ ३९ ॥
सुषुम्णःसूर्य्यरश्मिः ॥ सुषुम्णःसूर्य्यरश्मिश्चन्द्रमागन्ध
र्व्वस्तस्यनक्षत्राण्यप्सरसोभेकुरयोनाम॥ सनऽइदम्ब्रह्मक्षत्र
म्पातुतस्मैस्वाहावाड्डाभ्यःस्वाहा ॥ ४० ॥ इषिरोव्विश्वव्य
चाः ॥ इषिरोव्विश्वव्यचाव्वातोगन्धर्व्वस्तस्यापोऽअप्सरसऽऊ

र्ज्ञोनामं ॥ सनंऽइदम्ब्रह्मंक्षुत्रम्पांतुतस्म्मैस्वाहुावाट्ताब्भ्युः
स्वाहां ॥ ४१ ॥ भुज्युश्सुंपर्ण्णश्‌ ॥ भुज्युश्सुंपुर्ण्णोयुज्ञोगं
न्धुर्व्वस्त्तस्युदक्षिणाऽअप्सुरसंस्त्तावानामं ॥ सनंऽइदम्ब्रह्मंक्ष
त्रम्पांतुतस्म्मैस्वाहुावाट्ताब्भ्युःस्वाहां ॥ ४२ ॥ प्रजापंतिर्व्वि
श्वकंर्म्मा ॥ प्रजापंतिर्व्विश्वकंर्म्मामनोगन्धुर्व्वस्त्तस्यंऽऋक्सा
मान्न्यंप्सुरसुऽएष्टंयोनामं ॥ सनंऽइदम्ब्रह्मंक्षुत्रम्पांतुतस्मैस्वा
हुावाट्ताब्भ्युःस्वाहां ॥ ४३ ॥ सनं÷ ॥ सनोभुवनस्यपतेप्प्र

हिङ्कारायस्वाहा ॥ हिङ्कारायस्वाहाहिङ्कृतायस्वाहाक्क्रन्दते
स्वाहांवक्क्रन्दायस्वाहाप्प्रोथंतेस्वाहांप्प्रप्प्रोथायस्वाहांगन्धाय
स्वाहांग्घ्रातायस्वाहानिविंष्टायस्वाहोपंविष्टायस्वाहासन्दितायु
स्वाहाव्वल्गंतेस्वाहासीनायस्वाहाशयांनायस्वाहास्वपंतेस्वाहा
जाग्ग्रंतेस्वाहाकूजंतेस्वाहाप्प्रबुद्धायस्वाहांव्विजृम्भंमाणायस्वा
हाव्विचृंतायस्वाहासꣳहांनायस्वाहोपंस्स्थितायस्वाहायंनाय
स्वाहाप्प्रायंणायस्वाहा ॥ ७ ॥ [1]युतेस्वाहा ॥ युतेस्वाहा

१ अत्र यकारस्य पादादौ सत्त्वाज्जकारोच्चारणम् ।

शु. य. संहि. ॥ १७ ॥

उ. वि. अ. ॥ २२ ॥

धावतेस्वाहोद्द्रावायस्वाहोद्द्रुतायस्वाहाशूकारायस्वाहाशूकृता
यस्वाहानिषण्णाय[1]स्वाहोत्थितायस्वाहाजवायस्वाहाबलाय
स्वाहाविवर्त्तमानायस्वाहाविवृत्तायस्वाहाविधून्वानायस्वाहा
विधूतायस्वाहाशुश्रूषमाणायस्वाहाशृण्वतेस्वाहेक्षमाणाय
स्वाहेक्षितायस्वाहावीक्षितायस्वाहानिमेषायस्वाहायदत्ति
तस्मैस्वाहायत्पिबतितस्मैस्वाहायन्मूत्रंकरोतितस्मैस्वा ॥ १७ ॥

१ निषण्णाय। अत्र द्वयोर्नकारयोर्णत्वं निपात्यते। प्रथमस्य "तवर्गे च" (शु. य. प्रा. ३ अ. ९४ सू.) इत्यनेन तवर्गस्य व्यवधानेन णत्वाप्राप्तौ द्वितीयस्य नकारस्य "स्वरयवहकपैश्च" (शु. य. प्रा. ३ अ. ८६ सू.) इत्यनेन व्यवधानातिरिक्तनकारस्य व्यवधानाण्णत्वाप्राप्तौ "निषण्णाय०" (शु. य. प्रा. ३ अ. ८७ सू.) इत्यनेन णत्वनिपातः।

हांकुर्व्वतेस्वाहांकृतायस्वाहां ॥ ८ ॥ [ २-३ ] तत्त्संवि
तुः ॥ तत्त्संवितुर्व्वरेण्ण्यम्भर्ग्गोदेवस्यधीमहि ॥ धियोयो
नःप्प्रचोदयात् ॥ ९ ॥ हिरंण्ण्यपाणिमूतये । सवितार
मुपंह्वये ॥ सचेत्ताद्देवतांपदम् ॥ १० ॥ देवस्यचेततं ॥
देवस्यचेततोमहीम्प्रसंवितुर्हवामहे ॥ सुमतिꣳसत्त्यराधसम्
॥ ११ ॥ सुष्टुतिꣳसुमतीवृधः[1] ॥ सुष्टुतिꣳसुमतीवृधोरातिꣳ
संवितुरीमहे ॥ प्रदेवायमतीविदे ॥ १२ ॥ रातिꣳसत्त्प

१ सुमतीवृधः । अत्र "अश्वरश्मिसुमति०" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वकारे परे ह्रस्वेकारस्य सुमतिशब्दस्य दीर्घत्त्वम् ।

तिम् ॥ रातिꣳसत्त्पतिम्महेसवितारमुपह्वये ॥ आसवन्देव
॥१८॥ वीतये ॥ १३ ॥ देवस्यसवितुः ॥ देवस्यसवितुर्म्मतिमासवं
विश्वदेव्यम् ॥ धियाभर्गम्मनामहे ॥ १४ ॥ अग्निꣳस्तो ॥२२॥
मैन । बोधयसमिधानोऽअमर्त्त्यम् ॥ हव्यादेवेषुनोदधत्
॥ १५ ॥ सहव्यवाट् ॥ सहव्यवाडमर्त्त्यऽउशिग्गदूतश्चनो
हितꣳ ॥ अग्निर्द्धियासमृण्वति ॥ १६ ॥ अग्निन्दूतम् ॥ ॥१८॥
अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२॥ऽआसादया

दिह ॥ १७ ॥ अजीजनोहि । पवमानसूर्य्यौंविधारेशक्मं
नापयं÷ ॥ गोजीरयाऽरᳩहंमाणःपुरन्ध्या ॥ १८ ॥ [ १०-४ ]
विभूर्म्मात्रा । प्रभूश्पित्राश्वौंसिहयोस्यत्त्योंसिमयोस्यर्वौंसिस
प्तिरसिव्वाज्यसिव्वृषासिनृमणाऽअसि ॥ ययुर्न्नामासिशिशुर्न्ना
मास्यादित्त्यानाम्पत्त्वान्न्विहिदेवाऽआशापालाऽएतन्देवेब्भ्यो
श्वम्मेधायप्प्रोक्षितᳩरक्षतेहरन्तिरिहरमतामिहधृतिरिहस्व
धृतिःस्वाहा ॥ १९ ॥ [ १-५ ] कायस्वाहा ॥ कायस्वाहाकस्मै

स्वाहाकतमस्मैस्वाहास्वाहाधिमाधीतायस्वाहामनःप्प्रजाप
॥ १९ ॥ तयेस्वाहाचित्तंविज्ञातायादित्त्यैस्वाहादित्त्यैमह्यैस्वाहादित्त्यै ॥ २२ ॥
सुमृडीकायैस्वाहासरस्वत्त्यैस्वाहासरस्वत्त्यैपावकायैस्वाहासर
स्वत्त्यैबृहत्त्यैस्वाहापूष्ण्णेस्वाहापूष्ण्णेप्प्रपत्थ्यायस्वाहापूष्ण्णे
नरन्धिषायस्वाहात्त्वष्ट्रेस्वाहात्त्वष्ट्रेतुरीपायस्वाहात्त्वष्ट्रेपुरुरूपा
यस्वाहाविष्ण्णवेस्वाहाविष्ण्णवेनिभूयपायस्वाहाविष्ण्णवेशि ॥ १९ ॥
पिविष्टायस्वाहा ॥ २० ॥ विश्वोदेवस्य । नेतुर्म्मर्त्तोवुरीतसक्

स्व्यम् ॥ व्विश्वौरायऽइंषुद्ध्यातिद्युम्म्नंव्वृंणीतपुष्ष्यसेस्वाहां ॥२१॥
[२-६] आब्रह्मंन् ॥ आब्रह्मंन्ब्ब्राह्मणोब्रंह्मवर्च्चसीजांयतामारा
ष्ट्रेरांजन्न्यः शूरंऽइषव्व्योतिव्व्याधीमंहारथोजांयतान्दोग्ग्ध्रींधेनु
र्व्वोढानड्वानाशुः सप्तिःपुरंन्धिर्य्योषांजिष्णूरंथेष्ठाः सभेयोयु
वास्ययजंमानस्यव्वीरोजांयतान्निकामेनिंकामेनःपर्ज्जन्न्योंव्वर्ष
तुफलंवत्त्योनऽओषंधयःपच्च्यन्ताँय्योगक्षेमोनंःकल्प्पताम्
सं. ४२ ॥२२॥ [१-७] प्राणायस्वाहां । पानायस्वाहांव्व्यानायस्वाहा

शु. य. संहि. ॥२०॥

चक्षुषे स्वाहा श्रोत्राय स्वाहा वाचे स्वाहा मनसे स्वाहा ॥ २३ ॥ उ. वि. अ.

[१-८] प्राच्यै दिशे । स्वाहार्वाच्यै दिशे स्वाहा दक्षिणायै दिशे ॥ २२ ॥

स्वाहार्वाच्यै दिशे स्वाहा प्रतीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोदी

च्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोर्ध्वायै दिशे स्वाहार्वाच्यै दिशे

स्वाहावाच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा ॥ २४ ॥ [१-९]

अद्भ्यः स्वाहा । वार्भ्यः स्वाहोदकाय स्वाहा तिष्ठन्तीभ्यः स्वा ॥ २० ॥

हा स्रवन्तीभ्यः स्वाहा स्यन्दमानाभ्यः स्वाहा कूप्याभ्यः

स्वाहा सूर्य्याभ्यᳬस्वाहा धार्य्याभ्यᳬस्वाहाऽर्णवाय स्वाहा समु
द्राय स्वाहा सरिराय स्वाहा ॥ २५ ॥ [ १-१० ] वाता
य स्वाहा । धूमाय स्वाहाऽभ्राय स्वाहा मेघाय स्वाहा विद्योतमा
नाय स्वाहा स्तनयते स्वाहा वस्फूर्ज्जते स्वाहा वर्षते स्वाहाववर्षते
स्वाहोग्रंवर्षते स्वाहा शीघ्रंवर्षते स्वाहोद्गृह्णते स्वाहोद्गृहीताय
स्वाहा प्रुष्णते स्वाहा शीकायते स्वाहा प्रुष्वाभ्यᳬस्वाहा ह्रादु
नीभ्यᳬस्वाहा नीहाराय स्वाहा ॥ २६ ॥ [ १-११ ] अग्न

ये॒स्वाहा॑ ॥ अ॒ग्नये॒स्वाहा॒सोमा॑य॒स्वाहेन्द्रा॑य॒स्वाहा॑पृथि॒व्यै
॥२१॥ स्वाहा॒न्तरि॑क्षाय॒स्वाहा॑दि॒वेस्वाहा॑दि॒ग्भ्यः॒स्वाहाशा॑भ्य॒ꣳस्वा
हो॒र्व्यै॑दि॒शेस्वाहा॒र्वाच्यै॑दि॒शेस्वाहा॑ ॥ २७ ॥ [१-१२] ॥ २२ ॥
नक्ष॑त्रेभ्य॒ꣳस्वाहा॑। नक्ष॒त्रिये॑भ्य॒ꣳस्वाहा॑होरा॒त्रेभ्य॒ꣳस्वाहा॑
र्द्धमा॒सेभ्य॒ꣳस्वाहा॒मासे॑भ्य॒ꣳस्वाहऽऋ॒तुभ्य॒ꣳस्वाहा॑र्त्त॒वेभ्य॒ꣳ
स्वाहा॑संवत्स॒राय॒स्वाहा॒द्यावा॑पृथि॒वीभ्या॒ꣳस्वाहा॑च॒न्द्राय॒स्वा
हा॒सूर्या॑य॒स्वाहा॑र॒श्मिभ्य॒ꣳस्वाहा॒वसु॑भ्य॒ꣳस्वाहा॑रु॒द्रेभ्य॒ꣳ ॥ २१ ॥

स्वाहाऽदित्येभ्युः स्वाहा मरुद्भ्युः स्वाहा विश्वेभ्यो देवेभ्युः
स्वाहा मूलेभ्युः स्वाहा शाखाभ्युः स्वाहा वनस्पतिभ्युः स्वा
हा पुष्पेभ्युः स्वाहा फलेभ्युः स्वाहौषधीभ्युः स्वाहा ॥ २८ ॥
[१-१३] १३०० शतम् ॥ पृथिव्यै स्वाहा ॥ पृथिव्यै स्वाहान्त
रिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्राय स्वाहा नक्ष
त्रेभ्युः स्वाहाद्भ्यः स्वाहौषधीभ्युः स्वाहा वनस्पतिभ्युः स्वा
हा परिप्लवेभ्युः स्वाहा चराचरेभ्युः स्वाहा सरीसृपेभ्युः स्वाहा

॥ २९ ॥ [१-१४] असवेस्वाहा ॥ असवेस्वाहावसवेस्वाहा
विभुवेस्वाहाविवस्वतेस्वाहागणश्श्रियेस्वाहागणपतयेस्वाहाभि
भुवेस्वाहाधिपतयेस्वाहाशूषायस्वाहासꣳसर्प्पायस्वाहाचन्द्रा
यस्वाहाज्ज्योतिषेस्वाहामलिम्लुचायस्वाहादिवापतयतेस्वाहा
॥ ३० ॥ [१-१५] मधवेस्वाहा ॥ मधवेस्वाहामाधवाय
स्वाहाशुक्क्रायस्वाहाशुचयेस्वाहानभसेस्वाहानभस्यायस्वाहे
षायस्वाहोर्ज्जायस्वाहासहसेस्वाहासहस्यायस्वाहातपयेस्वाहा

तप॒स्या॑य॒स्वाहा॑ᳪं॒हस॒स्प॒त॑ये॒स्वाहा॑ ॥ ३१ ॥ [१-१६] व्वाजा॑य॒
स्वाहा॑ । प्प्रस॒वाय॒स्वाहा॑पि॒जाय॒स्वाहा॒क्क्रत॑वे॒स्वाहा॒स्व॒ः स्वा
हा॑मू॒र्द्ध्ने॑स्वाहा॑व्य॒श्नु॒वि॒ने॒स्वाहान्त्या॑य॒स्वाहान्त्या॑यभौव॒नाय॒
स्वाहा॒भुव॑नस्य॒पत॑ये॒स्वाहाधि॑पत॒ये॒स्वाहा॑प्प्र॒जाप॑त॒ये॒स्वाहा॑
॥ ३२ ॥ [१-१७] आयु॑र्य्य॒ज्ञेन॑ । कल्पता॒ᳪं॒स्वाहा॑प्प्रा॒णो
य॒ज्ञेन॑कल्पता॒ᳪं॒स्वाहा॑पा॒नोय॒ज्ञेन॑कल्पता॒ᳪं॒स्वाहा॑व्व्या॒नो
य॒ज्ञेन॑कल्पता॒ᳪं॒स्वाहौ॑दा॒नोय॒ज्ञेन॑कल्पता॒ᳪं॒स्वाहा॑स॒मा॒

नोयज्ज्ञेनंकल्पताꣳस्वाहाचक्षुर्य्यज्ज्ञेनंकल्पताꣳस्वाहा 
॥२२॥ श्श्रोत्रँय्यज्ज्ञेनंकल्पताꣳस्वाहाव्वाग्ग्यज्ज्ञेनंकल्पताꣳस्वा 
हामनोयज्ज्ञेनंकल्पताꣳस्वाहात्मायज्ज्ञेनंकल्पताꣳस्वा ॥२२॥
हाब्रह्मायज्ज्ञेनंकल्पताꣳस्वाहाज्ज्योतिर्य्यज्ज्ञेनंकल्पताꣳ
स्वाहास्वर्य्यज्ज्ञेनंकल्पताꣳस्वाहापृष्ठँय्यज्ज्ञेनंकल्पताꣳ
स्वाहायज्ज्ञोयज्ज्ञेनंकल्पताꣳस्वाहा॥३३॥[१-१८]एकंस्म्मै
स्वाहा ॥ एकंस्म्मैस्वाहाद्वाब्भ्याꣳस्वाहाशतायस्वाहैकंशताय ॥२३॥

स्वाहा॒व्युष्ट्यै॒स्वाहा॒स्व॒र्ग्गाय॒स्वाहा॑ ॥३४॥ [१-१९] इतिश्रीवा-
जसनेयसंहितायां द्वाविंशोऽध्यायः ॥ २२ ॥ श्रीवेदपुरुषाय
नमः॥अनुवाकसूत्रम्॥ हिरण्यगर्भोयश्श्प्राणतोद्वेकौ, सुञ्ज
न्त्यष्टौ, व्वायुष्ट्वापञ्च, प्राणायतिस्र, उत्सक्थ्याद्वादश, गायत्री
त्रिष्टुप्, कस्त्वाषट्कौ, कश्स्विदष्टौ, कास्विद्दश, सुभूश्स्वयंभू-
स्तिस्र, एकादश पञ्चषष्टिः ॥ [अ. २३ मं. ६५ अनु. ११]
हरिः ॐ ॥ हि॒र॒ण्य॒ग॒र्भश्सम् ॥ हि॒र॒ण्य॒ग॒र्भश्सम॑वर्त्त॒ताग्ग्रे॑

 भूतस्यंजातःपतिरेकंऽआसीत् ॥ सदांधारपृथिवीन्द्यामुते 
 माङ्कस्म्मैदेवायंहविषांव्विधेम ॥ १ ॥ उपयामगृहीतोसि । 
प्प्रजापंतयेत्त्वाजुष्टंङ्गृह्णाम्म्येषतेयोनिःसूर्य्यस्त्तेमहिमा ॥ ॥ २३ ॥
यस्त्तेहंन्त्संवत्त्सरेमंहिमासम्बभूवयस्त्तेंव्वायावन्तरिंक्षेम
हिमसांम्बभूवयस्त्तेंदिविसूर्य्यैमहिमासंम्बभूवतस्म्मैतेमहि
म्न्नेप्प्रजापंतयेस्वाहांदेवेब्भ्य्यंः ॥ २ ॥ [२-१] यःप्प्राण ॥ २४ ॥
तः ॥ यःप्प्राणतोनिंमिषतोमंहित्त्वैकऽइद्द्राजाजगंतोबभूव ॥

यऽईशेऽअस्यद्विपदश्चतुष्पदः कस्म्मैदेवायहविषाविधेम
॥ ३ ॥ उपयामगृहीतोसि । प्प्रजापतयेत्त्वाजुष्टङ्गृह्णाम्म्येष
तेयोनिश्चन्द्रमास्त्तेमहिमा ॥ यस्त्तेरात्रौसंवत्त्सरेमहिमासम्ब
भूवयस्त्तेपृथिव्यामग्नौमहिमासम्बभूवयस्त्तेनक्षत्रेषुचन्द्रम
सिमहिमासम्बभूवतस्म्मैतेमहिम्नेप्प्रजापतयेदेवेब्भ्यःस्वाहा

---

१ द्वयोस्तु स्वरयोर्मध्ये सन्धिर्यत्र न दृश्यते । विवृत्तिस्तत्र विज्ञेया "यऽईशे" तु निदर्शनम् । या. शि. । अत्र यः इति पदस्थस्य विसर्गस्य "कण्ठ्यपूर्वो यकारमरिफितः" (शु. य. प्रा. ४ अ. ४७ सू.) इत्यनेन यकारे "यवयोः पदान्तयोः स्वरमध्ये लोपः" (शु. य. प्रा. ४ अ. १२५ सू.) इत्यनेन यस्य लोपेऽकारेकारयोः "कण्ठ्यादिवर्णे एकारम्" (शु. य. प्रा. ४ अ. ५३ सू.) इत्यनेनैकारे प्राप्ते "न परकालः पूर्वकाले पुनः" (शु. य. प्रा. ३ अ. ४ सू.) इत्यनेन निषेधे सन्ध्यभावः । उच्चारणेऽप्यर्धमात्राकालिको विरामः । तज्ज्ञापकं(ऽ)इत्याकारकं चिह्नम् । अत्र पाकवतीवृत्तिर्ज्ञेया प्रारम्भे ह्रस्वयोगात् ।

॥ २५ ॥

॥ ४ ॥ [२-२] युञ्जन्तिब्ब्रद्ध्नम् ॥ युञ्जन्तिब्ब्रद्ध्नमंरुषञ्चर
न्तम्परितस्त्थुषं÷ ॥ रोचंन्तेरोचनादिवि ॥ ५ ॥ युञ्जन्त्यंस्य ॥
युञ्जन्त्यंस्युकाम्म्याहरीव्विपंक्क्षसारथें ॥ शोणांधृष्ण्णूनृवा
हंसा ॥ ६ ॥ यद्धातं÷ ॥ यद्धातौऽअपोऽअगंनीगन्प्रियामिन्द्रंस्य
तन्न्वम् ॥ एतॐस्तोतरनेनंपथापुनरश्श्वमावंर्त्तयासिनः ॥ ७ ॥
व्वसंवस्त्वा । ञ्जन्तुगायत्त्रेणच्छन्दंसारुद्रास्त्वांञ्जन्तुत्त्रैष्टुंभे
नच्छन्दंसादित्त्यास्त्वांञ्जन्तुजागंतेनच्छन्दंसा ॥ भूर्भुवःस्व



॥ २३ ॥

॥ २५ ॥

र्ह्वांजी३॥ र्न्छाची३॥ न्यग्घ्येगव्यंऽएतदन्नंमत्तदेवाऽएतदन्नंम

द्धिप्प्रजापते ॥ ८॥ कश्स्वित् ॥ कश्स्विदेकाकीचंरतिकऽउंस्वि

ज्जायतेपुनं÷ ॥ किꣳस्विद्धिमस्यंभेषजङ्किम्म्वावपंनम्महत्

॥ ९ ॥ सूर्य्यंऽएकाकी । चंरतिचन्द्रमांजायतेपुनं[1]÷ ॥

अग्निर्हिमस्यंभेषजम्भूमिरावपंनम्महत् ॥ १० ॥ कास्वित् ॥

कास्विदासीत्पूर्वंचित्तिꣳकिꣳस्विदासीद्बृहद्वयं÷ ॥ कास्विदा

---

१ यत्र संयोगपरोऽसंयोगपरो वकाररहितो वकारसहितः सविसर्गो मात्रिकः स्वरितस्वरस्तस्मात्परस्य विसर्गस्य(÷)इत्याकारक उभयक्षेपः । मात्रिके भयं क्षिपेत् । (या. शि.) सवकारे द्विमात्रिके तूभयक्षेपः । जात्यवकारात्परस्य विसर्गस्याप्युभयक्षेपः "सदुस्यैꣳ÷" ।

सं. ४४

सीत्त्पिलिप्पिलाकास्विदासीत्त्पिशङ्गिला ॥ ११ ॥ द्यौरासी
त् ॥ द्यौरासीत्त्पूर्व्वचित्तिरश्श्वंऽआसीद्द्बृहद्द्वयं÷ ॥ अविरा
॥२६॥ सीत्त्पिलिप्पिलारात्रीरासीत्त्पिशङ्गिला ॥ १२ ॥ [८-३] ॥ २३ ॥
व्वायुष्ट्वां । पचतैरवत्त्वसितग्ग्रीवश्च्छागैर्न्न्यग्ग्रोधश्चमसैश्शं
ल्म्मलिर्व्वृद्ध्यां ॥ एषस्यरात्थ्योवृषापड्ड्भिश्चतुर्ब्भिरेदंगन्ब्रह्मा
कृष्णणश्चनोवतुनमोग्ग्नये ॥ १३ ॥ सꣳशितोरश्म्मिना ॥ ॥ २६ ॥
सꣳशितोरश्म्मिनारथꣳसꣳशितोरश्म्मिनाहयं÷ ॥ सꣳ

१ यत्र मात्रिकात् द्विमात्रिकाद्वानुदात्तात्परो विसर्गस्तस्य विसर्गस्य (ꣳ) इत्याकारिकया कनिष्ठिकया निर्देशः।

शिंतोऽअप्प्स्वप्प्सुजाब्ब्रह्ममासोमंपुरोगवं ॥ १४ ॥ स्वयं
व्वांजिन् ॥ स्वयंव्वांजिँस्तन्न्वङ्कल्प्पयस्वस्वयँय्यंजस्वस्वयञ्जु
षस्व ॥ महिमातेन्न्येनन्नसन्नशे ॥ १५ ॥ नवै ॥ नवाऽ
उँ[१]ऽएतन्म्रियसेनरिष्ष्यसिदेवाँ२॥ऽइदेंषिपथिभिं॑सुगेभिं॑ ॥
यत्रासंतेसुकृतोयत्रतेययुस्तत्रंत्त्वादेवश्संवितादधातु ॥ १६ ॥
अग्निश्पशुश् ॥ अग्निश्पशुरांसीत्तेनांयजन्तसऽएतँल्लोक

१ "उकारोऽपृक्तोऽस्पर्शात्" (शु. य. प्रा. ४ अ. ९० सू.) अपृक्त एकवर्ण उकारोऽस्पर्शात्परः प्रकृत्या भवति स्वरे प्रत्यये। अत्रोकारोऽपृक्तोऽस्पर्शात्परः एतदिति स्वरे परे तस्मान्न सन्धिः।

शु. य. संहि. मंजयुद्यस्मिन्नग्निःसतेंलोकोभंविष्यतितञ्जेष्यसिपिबैताऽ उ. वि.
॥२७॥ अपः ॥ व्वायुःपशुरांसीत्तेनांयजन्तसऽएतँल्लोकमंजयुद्य अ. ॥ २३ ॥
स्मिन्व्वायुःसतेंलोकोभंविष्यतितञ्जेष्यसिपिबैताऽअपः ॥
सूर्य्यःपशुरांसीत्तेनांयजन्तसऽएतँल्लोकमंजयुद्यस्मिन्त्सू
र्य्यःसतेंलोकोभंविष्यतितञ्जेष्यसिपिबैताऽअपः ॥ १७ ॥
[५-४] प्राणायस्वाहां । पानायस्वाहांव्यानायस्वाहां ॥ ॥ २७ ॥

१ मात्रिकाद्विमात्रिकादुदात्तात् परस्य विसर्जनीयस्य (ः) इत्याकारिकया निर्देशः ।

अम्बेऽअम्बिकेम्बालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकः
सुभद्रिकाङ्काम्पीलवासिनीम् ॥ १८ ॥ गणानान्त्वा ।
गणपति ᳚ हवामहेप्प्रियाणान्त्वाप्प्रियपति ᳚ हवामहेनिधीना
न्त्वानिधिपति ᳚ हवामहेव्वसोमम ॥ आहमजानिगर्भध
मात्त्वमजासिगर्भधम् ॥ १९ ॥ ताऽउभौचतुरः पदः स
म्प्रसारयावस्वर्गेलोकेप्प्रोर्णुवाथांव्वृषाव्वाजीरेतोधारेतोदधातु
॥ २० ॥ [ ३-५ ] उत्सक्थ्याऽअव । गुदन्धेहिसमञ्जि

ञ्चारयावृषन् ॥ यस्त्रीणाञ्जीवभोजनः ॥ २१ ॥ यका
सकौ । शकुन्तिकाहलगिति वञ्चति । आहन्ति गभे पसो
निगल्गलीति धारका ॥ २२ ॥ यकोसकौ । शकुन्तकऽ
आहलगिति वञ्चति ॥ विवक्षतऽइव ते मुखमद्ध्वर्य्यो मानस्त्व
मभिभाषथाः ॥ २३ ॥ माता च । ते पिता च तेग्ग्रं वृक्षस्य
रोहतः ॥ प्रतिलामीति ते पिता गभे मुष्टिमतꣳसयत् ॥ २४ ॥ ॥ २८ ॥

---

१ चारयावृषन् । अत्र "अश्वरश्मिमतिसुमतिश्वसुतचारय°" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वृषन् इत्यस्य वकारे परे चारयाकारस्य दीर्घाकारः ।

माताचं। तेपिताचुतेग्ग्रेवृक्षस्यंक्क्रीडतः[1] ॥ द्विवंक्क्षतऽइवते
मुखम्ब्रह्मन्माच्त्वंवंदोबहु ॥ २५ ॥ ऊर्द्ध्वामैनाम् ॥ ऊर्द्ध्वा
मैनामुच्छ्रांपययगिरौभारꣳहरंन्निव ॥ अथांस्यैमद्ध्यंमेधताꣳ
शीतेव्वातैंपुनन्निंव ॥ २६ ॥ ऊर्द्ध्वमेंनम् ॥ ऊर्द्ध्वमेंनमुच्छ्रंय
ताद्दिरौभारꣳहरंन्निव ॥ अथांस्यमद्ध्यंमेजतुशीतेव्वातैंपुन
न्निंव ॥ २७ ॥ यदंस्याः ॥ यदंस्याऽअꣳहुभेद्द्यांःकृधुस्त्थू

[1] यत्र मात्रिकाद्विमात्रिकाद्वा प्रचयात्परो विसर्गस्तत्र विसर्गस्य ( ᳵ ) इत्याकारिकया कनिष्ठिकया निर्देशः ।

 लमुपातंसत् ॥ मुष्क्काविदंस्याऽएजतोगोशुफेशंकुलाविंव 
॥२९॥ ॥ २८ ॥ यद्देवासंः ॥ यद्देवासोंललामंगुम्प्रविष्ठीमिनमा 
विषुः ॥ सक्थ्नादेंदिश्श्यतेनारींसत्त्यस्यांक्षिभुवोयथा ॥२९॥ ॥ २३ ॥
यद्धंरिणः ॥ यद्धंरिणोयवमत्तिनपुष्टम्पशुमन्न्यंते ॥ शूद्राय
दर्य्यंजारानपोषांयधनायति ॥ ३० ॥ यद्धंरिणः ॥ यद्धंरि
णोयवमत्तिनपुष्टम्बहुमन्न्यंते । शूद्रोयदर्य्यायैजारोनपोषम ॥ २९ ॥
नुंमन्न्यते ॥ ३१ ॥ दधिक्क्राव्व्णोंऽअकारिषम् ॥ दधिक्क्रा

ण्णोऽअकारिषञ्जिष्णोरश्श्वस्यव्वाजिनंः ॥ सुरभिनोमुखा
करत्त्प्रणऽआयूंꣳषितारिषत् ॥ ३२ ॥ [ १२-६ ] गायत्त्री
त्रिष्टुप् ॥ गायत्त्रीत्त्रिष्टुब्ब्जगंत्त्यनुष्टुप्पङ्क्त्यासह ॥ बृहत्त्यु
ष्णिहाककुप्प्सूचीभिंःशम्म्यन्तुत्त्वा ॥ ३३ ॥ द्विपदायाः ॥
द्विपदायाश्श्चतुंष्प्पदास्त्रिपंदायाश्श्चषट्ट्पदाः ॥ विच्छंन्दायाश्श्चस
च्छंन्दाःसूचीभिंःशम्म्यन्तुत्त्वा ॥ ३४ ॥ महानाम्न्योरे
वत्त्यंः ॥ महानाम्न्योरेवत्त्योव्विश्श्वाऽआशांःप्प्रभूवंरीः ॥

मैधीँर्व्विद्युतोव्वाचं÷सुचीभिं÷शम्म्यन्तुत्त्वा ॥ ३५ ॥ नार्य्यँ 
 स्त्ते ॥ नार्य्यँस्त्तेपत्क्न्योलोमव्विचिन्न्वन्तुमनीषया ॥ देवा 
नाम्पत्क्न्योदिशं÷सुचीभिं÷शम्म्यन्तुत्त्वा ॥ ३६ ॥ रजता 
हरिणीः ॥ रजताहरिणीःसीसायुजोयुज्ज्यन्तेकर्म्मभिः ॥
अश्श्वंस्यव्वाजिनंस्त्वचिसिमाःशम्म्यन्तुशम्म्यंन्तीः ॥ ३७ ॥
कुविदङ्ग । यवंमन्तोयवंञ्चिद्यथादान्त्यंनुपूर्व्वंव्वियूयं ॥ इहेहैं ॥ ३० ॥
षाङ्कृणुहिभोजनानियेबर्हिषोनमंऽउक्तिंय्यजंन्ति ॥ ३८ ॥

[६-७] कस्त्वा ॥ कस्त्वाच्छ्यतिकस्त्वाव्विशास्त्तिकस्त्ते
गात्राणिशम्म्यति ॥ कऽउंतेशमिताकविः ॥ ३९ ॥ ऋत
वंस्त्ते ॥ ऋतवंस्त्तऽऋतुथापर्व्वशमितारोव्विशासतु ॥ संवत्त्सर
स्यतेजंसाशमीभिं÷शम्म्यन्तुत्त्वा ॥ ४० ॥ अर्द्धमासाःप
रूᳫंषि । तेमासाऽआच्छ्यन्तुशम्म्यन्तः ॥ अहोरात्राणि
मरुतोव्विलिष्टᳫंसूदयन्तुते ॥ ४१ ॥ दैव्याऽअद्ध्वर्य्यवं÷ ॥
दैव्याऽअद्ध्वर्य्यवस्त्वाच्छ्यन्तुव्विचंशासतु ॥ गात्राणिपर्व्व

शु. य. संहि. शस्त्तेसि[1]मांꣳकृण्णवन्तुशम्म्यंन्तीꣳ ॥ ४२ ॥ द्यौस्त्ते । पृथि उ. वि. अ.
॥ ३१ ॥ व्युन्तरिक्क्षंव्वायुश्च्छिद्द्रंपृणातुते ॥ सूर्य्यस्त्तेनक्क्षत्त्रैꣳसहलोक ॥ २३ ॥
क्कृणोतुसाधुया ॥ ४३ ॥ शन्ते ॥ शन्तेपरेब्भ्योगात्त्रेब्भ्यꣳ
शमस्त्ववरेब्भ्यꣳ ॥ शमस्त्थब्भ्योमज्जब्भ्यꣳशम्म्वस्त्तुतन्न्वै
तव ॥ ४४ ॥ [६-८] कश्स्वित् ॥ कश्स्विदेकाकी
चरतिकऽउंस्विज्जायतेपुनः ॥ किꣳस्विद्धिमस्यभेषजङ्कि ॥ ३१ ॥

१ "द्विमात्रिके क्षिपेद्क·म्" (या. शि.) इति नियमेन दीर्घस्वरितस्वराद्यत्र परो विसर्गस्तत्र(९)इत्याकारकः कनिष्ठिकानिर्देशवाचकोऽगुलिनिर्देशः सर्वत्र कार्यः ॥

म्म्वावपंनम्महत् ॥ ४५ ॥ सूर्य्यऽएकाकी । चंरतिचन्द्र
मांजायतेपुनः ॥ अग्निर्हिमस्यंभेषजम्भूमिरावपंनम्महत्
॥ ४६ ॥ किंस्वित् ॥ किंस्वित्सूर्य्यसमञ्ज्योतिःकिं
संमुद्रसंमसरः ॥ किंस्वित्पृथिव्यैवर्षीयःकस्यमात्रानविं
द्यते ॥ ४७ ॥ ब्रह्मसूर्य्यसमम् ॥ ब्रह्मसूर्य्यसमञ्ज्योतिर्द्यौः
संमुद्रसंमसरः ॥ इन्द्रःपृथिव्यैवर्षीयान्गोस्तुमात्रानविं
सं. ४५ द्यते ॥ ४८ ॥ पृच्छामित्त्वा । चितयेदेवसखयदित्त्वमत्रम

शु. य. संहि. नंसाजगन्थं ॥ येषुविष्णुंस्त्रिषुपदेष्वेष्टस्तेषुविश्वम्भुवंनमा उ. वि.
॥२२॥ विंवेशा ३ ॥ ॥ ४९ ॥ अपितेषुं । त्रिषुपदेष्वंस्मियेषुविश्व अ.
म्भुवंनमाविवेशं ॥ सद्यःपर्य्यैमिपृथिवीमुतद्यामेकेनाङ्गेनदि ॥ २३ ॥
वोऽअस्यपृष्ठम् ॥ ५० ॥ केष्वन्तः । पुरुंषऽआविंवेशुका
न्यन्तःपुरुंषेऽअर्पितानि ॥ एतद्ब्रह्मन्नुपंवल्[1]ह्हामासित्वाकिꣳ
स्विन्नःप्प्रातिंवोचास्यत्रं ॥ ५१ ॥ पञ्चस्वन्तः । पुरुंषऽआविं ॥ ३२ ॥

---

१ "कुर्वणी लहकारयोः" (या. शि.) लकारहकारयोर्योगे कुर्वणीनाम स्वरभक्तिः । अत्र पञ्चानां स्वरभक्तीनां मध्ये कुर्वणी वर्तते ।

वेशतान्यन्तश्पुरुषेऽअर्प्पितानि ॥ एतत्त्वात्रं प्रतिमन्न्वानोऽ
अस्म्मिनमाययाभवस्युत्तरोमत् ॥५२॥ [८-९] कास्वित् ॥
कास्विदासीप्पूर्वचित्तिः किंस्विदासीद्बृहद्वयः ॥ कास्वि
दासीत्पिलिप्पिलाकास्विदासीत्पिशङ्गिला ॥ ५३ ॥ द्यौरा
सीत् ॥ द्यौरासीत्पूर्वचित्तिरश्वंऽआसीद्बृहद्वयः ॥ अविरासी
त्पिलिप्पिलारात्रिरासीत्पिशङ्गिला ॥ ५४ ॥ काऽईम् ॥
काऽईमरेपिशङ्गिलाकाऽईङ्कुरुपिशङ्गिला ॥ कऽईमास्कन्दम

॥ २३ ॥ षतिकऽईम्पन्थांव्विसंर्प्पति ॥ ५५ ॥ अजारे । पिशङ्गिला

श्वाविक्कुंरुपिशङ्गिला ॥ शशऽआस्कन्दंमर्षत्यहिᳪंपन्थांव्वि

संर्प्पति ॥५६॥ कत्त्यंस्य । व्विष्ठाः कत्त्यक्षराणिकतिहोमासᳪंक ॥ २३ ॥

तिधासमिद्धᳪं ॥ यज्ञस्यंत्वाव्विदथांपृच्छमत्रंकतिहोतारऽऋतु

शोयंजन्ति॥५७॥षडंस्य । व्विष्ठाःशतमक्षराण्यशीतिर्होमाᳪं

समिधोहतिस्त्रः ॥ यज्ञस्यंतेव्विदथाप्प्रब्ब्रंवीमिसप्तहोतारऽऋतु ॥ २३ ॥

---

१ अत्र "या तु हंसपदानाम सा तु रेफषकारयोः । (या. शि.) रकारषकारयोर्योगे हंसपदानाम स्वरभक्तिः । अत्र हंसपदानामस्वरभक्तिः । एवं सर्वत्र ।

शोयंजन्ति ॥५८॥ कोऽअस्य। व्वेदभुवनस्यनाभिङ्कोद्यावापृथि
वीऽअन्तरिक्क्षम्॥ कश्सूर्य्यस्यव्वेदबृहतोजनित्रङ्कोव्वेदचन्द्रमं
सँय्यतोजाः ॥५९॥ व्वेदाहम्॥ व्वेदाहमस्यभुवनस्यनाभिंव्वेदद्या
वांपृथिवीऽअन्तरिक्क्षम्॥ व्वेदसूर्य्यस्यबृहतोजनित्रमथोव्वेदच
न्द्रमंसँय्यतोजाः ॥६०॥ पृच्छामित्त्वा॥ पृच्छामित्त्वापरमन्तं
म्पृथिव्याःपृच्छामियत्त्रभुवनस्यनाभिं॥ पृच्छामित्त्वावृ
ष्णोऽअश्श्वस्यरेतं॥पृच्छामिव्वाचःपरमंव्योम ॥ ६१ ॥ इयं

शु. य. संहि. ॥२४॥ व्वेदिः ॥ इयंव्वेदिःपरोऽअन्तःपृथिव्याऽअयँऽयज्ञोभुवनस्य उ. वि.
नाभिः ॥ अयꣳसोमोव्वृष्ण्णोऽअश्श्वस्यरेतोब्ब्रह्मायंव्वाचःपरमं अ.
व्योम ॥ ६२ ॥ [ १०-१० ] सुभूःस्वयम्भूः । प्प्रथमोन्त ॥ २३ ॥
र्म्महत्त्यर्ण्णवे ॥ दधेहगर्ब्भमृत्त्वियँऽयतोजातःप्प्रजापतिः
॥ ६३ ॥ होतायक्षत् ॥ होतायक्षत्प्प्रजापतिꣳसोमस्यम
हिम्न्नः ॥ जुषताम्पिबतुसोमꣳहोतर्य्यज ॥ ६४ ॥ प्रजापते ॥ २४ ॥
न । त्त्वदेतान्यन्न्योव्विश्श्वारूपाणिपरिताबभूव ॥ यत्त्कामा

स्त्तेजुहुमस्त्तन्नोऽअस्त्तुव्वयꣳस्यामपतंयोरयीणाम् ॥ ६५ ॥
[ ३-११ ] इतिश्रीवाजसनेयसंहितायां त्रयोविंशोऽध्यायः
॥ २३ ॥ ॥ श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्रम् ॥
अश्वस्त्तूपरो, धूम्म्रान्व्वसन्ताय, समुद्द्रायशिशुमारान्, मयुः
प्प्राजापत्त्योदशका, श्चत्वारश्चत्वारिꣳशत् [ अ. २४ मं.
४० अनु. ४ ] ॥ हरिः ॐ ॥ अश्वंस्त्तूपरः ॥ अश्वंस्त्तूपरोगो
मृगस्त्तेप्प्रांजापत्त्याः कृष्णग्ग्रीवऽआग्ग्नेयोरराटेपुरस्त्तात्त्सार

शु. य. संहि. स्वतीमेष्ष्यधस्त्ताद्धन्न्वोराश्श्विनावधोरामौबाह्वोःसौमापौ उ. वि.
॥ ३५ ॥ ष्णःश्यामोनाभ्याᳫंसौर्य्ययमौश्श्वेतश्श्चकृष्णश्श्चपार्श्श्वयो अ.
स्त्वाष्ट्रौलोमशसक्त्थौसक्त्थ्योर्व्वायव्व्यःश्वेतःपुच्छऽइन्द्रायस्व ॥ २४ ॥
पस्यायव्वेहद्वैष्णवोव्वामनः ॥ १ ॥ रोहितोधूम्म्ररोहि
तᳵ । कर्क्कन्धुरोहितस्त्तेसौम्म्याबब्भ्रुररुणबब्भ्रुᳵशुकबब्भ्रुस्त्ते
व्वारुणाःशितिरन्ध्रोऽन्न्यतःशितिरन्ध्रᳵसमन्तशितिरन्ध्रस्त्ते
सावित्राःशितिबाहुरन्न्यतःशितिबाहुᳵसमन्तशितिबाहुस्त्ते ॥ ३५ ॥

बार्हस्पत्त्याः पृषंतीक्क्षुद्द्रपृषतीस्त्थूलपृषतीतामैत्त्रावरुण्ण्यः ॥ २ ॥ शुद्धवालः सर्व्वशुद्धवालः ॥ शुद्धवालः सर्व्वशुद्धवालोमणिव्वालस्त्तऽआश्श्विनाः श्येतः श्येताक्क्षोरुणस्त्तेरुद्द्राय पशुपतयेकण्ण्णायामाऽअवलिप्प्तारौद्द्रानभोरूपाः पार्ज्जन्न्याः ॥ ३ ॥ पृश्निस्त्तिरश्चीनपृश्निः ॥ पृश्निस्त्तिरश्चीनपृश्निरुर्द्ध्वपृश्निस्त्तेमारुताः फल्ग्गूर्ल्लोहितोण्र्णीपलक्षीताः सारस्वत्त्यः प्लीहाकर्ण्णः शुण्ठाकर्ण्णोद्ध्यालोहकर्ण्णस्त्तेत्त्वाष्ट्राः कृष्ण्ण

शु. य. संहि.

ग्ग्रीवꣳशितिकक्षोऽञ्जि[1]सक्थस्त्तऽऐन्द्राग्ग्नाः कृष्ष्णाञ्जिरल्प्पा | उ. वि. अ.

॥२६॥ ञ्जिर्म्महाञ्जिस्त्तऽउषस्याः ॥ ४ ॥ शिल्प्पाव्वैश्श्वदेव्व्याः ॥

शिल्प्पाव्वैश्श्वदेव्व्योरोहिण्ण्यस्त्र्यवयोव्वाचेविज्ज्ञाताऽअदित्त्यैस ॥ २४ ॥

रूपाधात्त्रेव्वत्त्सतर्य्योदेवानाम्पत्त्नीब्भ्यः ॥ ५ ॥ कृष्ष्ण

ग्ग्रीवाऽआग्ग्नेयाः । शितिब्भ्रवोव्वसूनाꣳरोहितारुद्द्राणाꣳ

श्वेताऽअवरोकिणऽआदित्त्यानान्नभोरूपाःपार्ज्जन्न्याः ॥ ६ ॥ ॥ २६ ॥

---

१ अञ्जिसक्थस्त्ते । अत्र "भाविभ्य सः षं समानपदे" (शु. य. प्रा. ३ अ. ५९ सू.) इत्यनेन सस्य षत्वे प्राप्ते "अनुसन्तनो तु बृहस्पतिसुतस्य सुसमिद्धाय सुसन्दृशमसस्वाऽभिसंविशन्तु सुसस्याअतिस्थूलम्मुसले पत्नी संयाजान्क्रतुस्थालञ्जिक्स्थो (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन सस्य प्रकृतिभावे रूपम् ।

उन्नतऽऋषुभः ॥ उन्नतऽऋषभोव्वामनस्त्तऽऐन्द्रावैष्णवाऽ
उन्नतश्शितिबाहुश्शितिपृष्ठस्त्तऽऐन्द्राबार्हस्पत्त्याश्शुकरूपा
व्वाजिनाश्कुल्माषाऽआग्निमारुताश्श्यामाश्पौष्णाः ॥ ७ ॥
एताऽऐन्द्राग्नाः ॥ एताऽऐन्द्राग्नाद्विरूपाऽअग्नीषोमीया
व्वामनाऽअनड्वाहऽआग्नावैष्णवाव्वशामैत्रावरुण्योन्यतऽए
न्योमैत्र्यः ॥ ८ ॥ कृष्णग्रीवाऽआग्नेयाः ॥ कृष्णग्री

---

१ अत्र "जात्ये च स्वरिते चैव वकारो यत्र दृश्यते । कर्तव्यस्तूभयक्षेपो "वायुदृया÷ इति निदर्शनम्" (या. शि.) न्युब्जापरपर्याये जात्यस्वरे वकारे यकारे वा वत्सशृङ्गवत् कुमारीकुचयुग्मवत् (÷) इत्याकारको दक्षिणहस्तस्यांगुल्या उभयक्षेपः कार्यः । यथा वकारयोगे जात्य उभयक्षेपस्तथैव यकारेऽप्युभयक्षेपः ।

शु. य. संहि. ॥ ३७॥ वाऽआग्नेयाबब्भ्रवः सौम्म्याःश्वेतावायव्व्याऽअविज्ज्ञाताऽ उ. वि. अ.
अदित्त्यैसरूपाधात्त्रेव्वत्सतर्य्योदेवानाम्पत्नीब्भ्यः ॥ ९ ॥ ॥ २४ ॥
कृष्ष्णाभौमाः ॥ कृष्ष्णाभौमाधूम्म्राऽआन्तरिक्क्षाबृहन्तो
दिव्व्याःशबलावैद्युताःसिद्ध्मास्तारकाः ॥ १० ॥ [ १०-१ ]
धूम्म्रान्वसन्तायं ॥ धूम्म्रान्वसन्तायालभतेश्वेतान्ग्रीष्म्माय
कृष्ष्णान्वर्षाब्भ्योरुणाञ्छरदेपृषतोहेमन्तायपिशङ्गाञ्छि ॥ ३७ ॥
शिराय ॥ ११ ॥ त्र्यवयोगायत्र्यै । पञ्चावयस्त्रिष्टुभेदित्त्य

वाहोजगंत्त्यैत्रिवत्त्साऽअंनुष्टुभैतुर्य्यवाहंऽउष्णिहे ॥ १२ ॥
पृष्ठवाहोंव्विराजें ॥ पृष्ठवाहोंव्विराजंऽउक्क्षाणोंबृहत्त्याऽऋष
भाःककुभेनड्वाहं÷पङ्क्त्यैधेनवोतिच्छन्दसे ॥ १३ ॥ कृष्णग्ग्रीवाऽआग्नेयाः ॥ कृष्णग्ग्रीवाऽआग्नेयाबब्भ्रवं÷सौ
म्म्याऽउंपध्वस्त्ताःसांवित्राव्वंत्त्सतर्य्यं÷सारस्वत्त्य÷श्यामाः
पौष्णाःपृश्न्नंयोमारुताबंहुरूपाव्वैश्वदेवाव्वशाद्द्यावापृथिवी
यांः ॥ १४ ॥ उक्ताःसंञ्चराः ॥ उक्ताःसंञ्चराऽएताऽऐन्द्रा
सं. ४६

ग्नाःकृष्णाव्वारुणाःपृश्न्नयोमारुताःकायास्तूपराः ॥ १५ ॥
अग्नयेनीकवते । प्रथमजानालभतेमरुद्भ्यःसान्तपने
भ्यःसवात्यान्मरुद्भ्योगृहमेधिभ्योबष्किहान्मरुद्भ्यः
क्रीडिभ्यःसꣳसृष्टान्मरुद्भ्यःस्वतवद्भ्योनुसृष्टान् ॥ १६ ॥
उक्ताःसञ्चराः ॥ उक्ताःसञ्चराऽएताऽऐन्द्राग्नाः[1]प्राशृङ्गा
माहेन्द्राबहुरूपाव्वैश्वकर्म्मणाः ॥ १७ ॥ धूम्राबभ्रुनीका 

१ प्राशृङ्गा। अत्र प्रशृङ्ग इति पदम्। प्रशब्दात् शृङ्गशब्दे परे "प्रवणशृङ्गयासेषु" (शु. य. प्रा. ३ अ. १०५ सू.) इत्यनेन ह्रस्वाकारस्य दीर्घाकारे प्राशृङ्गा।

शाꣳ । पितॄणाꣳ[1] सोमवताम्बब्भ्रवो धूम्म्रनीकाशाः पितॄणां बर्हि-
षदाङ्कृष्ण्णा बब्भ्रु[2]नीकाशाः पितॄणामग्निष्ष्वात्तानाङ्कृष्ण्णाः पृ-
षन्तस्त्रैयम्बकाः ॥ १८ ॥ उक्ताः सञ्चराः ॥ उक्ताः
सञ्चराऽएताः शुनासीरीयाः श्वेताव्वायव्व्याः श्वेताः सौर्य्याः
॥ १९ ॥ व्वसन्ताय कपिञ्जलान् ॥ व्वसन्ताय कपिञ्जलानाल-

---

१ सोमवतीम् । अत्र "विश्वदेव्यसोमौ" ( शु. य. प्रा. ३ अ. ११८ सू. ) इत्यनेन वतीशब्दपरे सोमशब्दाकारस्य दीर्घाकारविधानान्न वतापरे भवति, अतो न दीर्घः ।     २ कृष्ण्णा बब्भ्रुनीकाशाः । अत्र समानपदे "ऋषरेभ्य" इति णत्वप्राप्तौ "निवनिनसः प्रपीनम्" ( शु. य. प्रा. ३ अ. ९१ सू. ) इत्यनेन नि वनि नस प्रपीनम् एते नकारा प्रकृत्या भवन्ति समानपदे इति निषेधान्नात्र णत्वम् । त्वत्र निशब्दस्य दीर्घत्वं "पीबासोमम्" ( शु. य. प्रा. ३ अ. १३० सू. ) इत्यनेन भवति ।

भतेग्ग्रीष्म्मायकलविङ्कान्न्वर्षाब्भ्यस्त्तित्तिरीञ्छरदेव्वर्त्तिकाहे
मन्तायककराञ्छिशिरायव्विककरान् ॥ २० ॥ [१०-२]
समुद्रायशिशुमारान् ॥ समुद्रायशिशुमारानालभतेपर्ज्जन्न्या
यमण्डूकानद्भ्योमत्स्यान्मित्त्रायकुलीपयान्न्वरुणायनाक्क्रा
न् ॥ २१ ॥ सोमायहंसान् ॥ सोमायहंसानालभतेव्वायवेब
लाकाऽइन्द्राग्निभ्याङ्क्रुञ्चान्मित्त्रायमद्गून्न्वरुणायचक्क्रवाका
न् ॥ २२ ॥ अग्नयेकुटरून् ॥ अग्नयेकुटरूनालभतेव्वनस्प्पति

भ्य ऽउलूंकानग्नीषोमाभ्यांञ्चाषानश्विभ्याम्मयूरान्मित्राव
रुणाभ्यांङ्कपोतान् ॥ २३ ॥ सोमायलबान् ॥ सोमायलबा
नालभतेत्त्वष्ट्रेकौलीकान्गोषादीर्देवानाम्पत्नीभ्यःकुलीका
देवजामिभ्योग्नयेगृहपतयेपारुष्णान् ॥ २४ ॥ अह्नेपाराव
तान् ॥ अह्नेपारावतानालभतेरात्र्यैसीचापूरहोरात्रयोःसन्धि
भ्योजतूर्म्मासेभ्योदात्त्यौहान्त्संवत्त्सरायमहतःसुपर्णान्
॥ २५ ॥ भूम्म्यांऽआखून् ॥ भूम्म्यांऽआखूनालभतेन्तरि

क्षायपाङ्क्त्रान्दिवेकशान्दिग्ग्भ्योनकुलान्ब्बभ्रुकानवान्तर
दिशाब्भ्यः ॥ २६ ॥ वसुब्भ्यऽऋश्श्यान् ॥ वसुब्भ्यऽऋश्श्या
नालभतेरुद्द्रेब्भ्योरुरूनादित्त्येब्भ्योन्न्यङ्कून्विश्श्वेब्भ्योदेवेब्भ्यः
पृषतान्त्साद्ध्येब्भ्यःकुलुङ्गान् ॥ २७ ॥ ईशानायपरस्वतः ॥
ईशानायपरस्वतऽआलभतेमित्त्रायगौरान्वरुणायमहिषान्बृह
स्प्पतयेगवयाँस्त्त्वष्ट्रऽउष्ट्रान् ॥ २८ ॥ प्रजापतयेपुरुषान् ॥
प्रजापतयेपुरुषान्हस्त्तिनऽआलभतेवाचेप्प्लुषीँश्चक्षुषेमश

काऽन्छोत्रांयुभृङ्गाः ॥ २९ ॥ शतम् ॥१४००॥ प्रजापंतयेच ।
व्वायवैंचगोमृगोव्वरुणायारण्ण्योमेषोयुमायकृष्णणोंमनुष्ष्यरा
जायंमुर्क्कटश्शार्द्दूलायंरोहिद्दृषभायंगवयीक्षिप्रश्श्येनायुव्व
र्त्तिकानीलङ्गोःक्क्रिमिः समुद्द्रायंशिशुमारोंहिमवंतेहस्त्ती
॥ ३० ॥ [ १०-३ ] मयुश्प्प्रांजापृत्त्यश् ॥ मयुश्प्प्रांजापृत्त्यऽ
उलोहुलिक्क्ष्णणोंव्वृषदुंछशस्त्तेधात्रेदिशाङ्क्कङ्कोधुङ्क्षाग्ग्नेयीकंल
विङ्कोंलोहिताहिश्पुंष्करसादस्त्तेत्त्वाष्ट्राव्वाचेक्क्रुञ्चः ॥ ३१ ॥

सोमायकुलुङ्गः ॥ सोमायकुलुङ्गऽआरण्योजोनकुलःशका
तेपौष्ण्णाःक्क्रोष्ट्टामायोरिन्द्रस्यगौरमृगःपिद्द्वोन्न्यङ्कुःकक्कट
स्त्तेनुमत्त्यैप्प्रतिश्श्रुत्त्कायैचक्क्रवाकः ॥ ३२ ॥ सौरीबलाका ।
शार्ग्गःसृजयःशयाण्डकस्त्तेमैत्राःसरस्वत्त्यैशारिःपुरुषवाक्
श्वा[1]विद्भौमीशार्द्दूलोवृकःपृदाकुस्त्तेमन्न्यवेसरस्वतेशुकःपुरुष
वाक् ॥ ३३ ॥ सुपर्णःपार्ज्जन्न्यः ॥ सुपर्णःपार्ज्जन्न्यऽ ॥ ४१ ॥
आतिर्व्वाहसोदर्व्विदातेव्वायवेबृहस्पतयेव्वाचस्पतयेपैङ्गराजो

१ श्वाविद्भौमी । अत्र श्वविद्भौमी इति पदम् । "अश्वरश्मिमतिसुमतिश्वसुत°" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वकारे परे श्वस्य ह्रस्वाकारस्य दीर्घाकारः ।

ऌजऽआन्तरिक्क्षश्प्लुवोमुह्युर्म्मत्स्युस्त्तेनदीपृतयेद्यावापृथिवी
यं÷कूर्म्मश् ॥ ३४ ॥ पुरुषमृगश्चन्द्रमसं ॥ पुरुषमृगश्चन्द्र
मंसोगोधाकालकादार्व्वाघाटस्त्तेव्वनस्प्पतीनाङ्कुकुवाकु÷सावि
त्रोहुहुसोव्वातस्यनाक्क्रोमकरःकुलीपयुस्त्तेकूपारस्याह्रियैशल्ल्य
कं ॥ ३५ ॥ एण्ण्यह्नं÷ ॥ एण्ण्यह्नोमण्डूकोमूषिकाति[2]

---

१ दार्वाघाटः। दारु आघातः इति पदम्। अत्र "त आपादनाऽस्वरात्" ( शु. य. प्रा. ३ अ. ४८ सू. ) इत्यनेनानादस्वरादाघाशब्दात्परस्य तकारस्य मूर्द्धन्यो भवति दार्वाघाट इति। २ तित्तिरिस्ते। अत्र "सकारे परे च" ( शु. य. प्रा. ३ अ. ७८ सू. ) इत्यनेन सकारपरादेकाक्षरादेकारपरे तकारे विसर्जनीयस्य सकारः प्राप्तः। सः "प्रकृत्या नानापदस्थे तकारे ( शु. य. प्रा. ३ अ. ८१ सू. ) इत्यनेन प्रकृतिभावे प्राप्ते "अनुसन्तनोतु०" ( शु. य. प्रा. ३ अ. ८२ सू. ) इत्यनेन निषिध्यते। सकारो भवत्येव।

त्तिरिस्त्तेसर्प्पाणाँह्लोपाशऽआश्विनश्कृष्णोरात्र्याऽऋक्षोज
तूश्सुंषिलीकातऽइंतरजनानाञ्जहंकाव्वैष्णवी ॥ ३६ ॥ अन्न्य
वापोर्द्धमासानाम् ॥ अन्न्यवापोर्द्धमासानामृश्श्योमयूरः
सुपर्ण्णस्त्तेगन्धर्व्वाणामपामुद्रोमासाङ्कश्श्यपोरोहित्त्कुण्डृणा
चीगोलत्तिकातेऽ[1]प्सरसाम्मृत्त्यवेसितः ॥ ३७ ॥ व्वर्षाहूर्ऋतू
नाम् ॥ व्वर्षाहूर्ऋतूनामाखुश्कशोमान्थालस्त्तेपितॄणाम्बलायां ॥ ४२ ॥

१ "ए-ओ-आभ्यामुदात्ताभ्यामकारो निहितश्च यः। स च यत्र प्रलुप्येते तं चाभिनिहितं विदुः" या. शि. ॥ अत्र ते अप्सरसामित्यासीत्। अत्रैकारात्परस्याकारस्य "एदोद्भ्यामकारः" (शु. य. प्रा. अ. ३६१ सू.) इत्यनेनाकारस्य पूर्वरूपः। अत्राभिनिहितस्वरो ज्ञेयः। तथौकारेऽपि वेदोसीत्यादौ।

जगरोव्वसूनाङ्कपिञ्जलःकपोतऽउलूकःशशस्तेनिर्ऋत्यैव्वरुणा
यारण्योमेषः ॥ ३८ ॥ श्वित्रऽआदित्यानाम् ॥ श्वित्रऽ
आदित्यानामुष्ट्रोघृणीवान्[2]वार्ध्रीनसस्तेमत्याऽअरण्यायसृ
मरोरुरूरौद्रःक्क्वयिःकुटरुर्दात्यौहस्तेव्वाजिनाङ्कामायपिकः
॥ ३९ ॥ खड्गोव्वैश्वदेवः । श्वाकृष्णःकर्णोगर्दभस्तरक्षु
स्तेरक्षसामिन्द्रायसूकरःसिꣳहोमारुतःकृकलासःपिप्पकाश

१ घृणीवान् । अत्र "अश्वरश्मिमतिसुमतिश्वसुतचारयघृणि" इत्यनेन वकारे परे घृणिशब्दस्येकारस्य दीर्घेकारः । २ वार्ध्रीनसस्ते । अत्र समानपदे "ऋपरेभ्यः" इति णत्वप्राप्तौ "निवनिनसः प्रपीनम्" (शु. य. प्रा. ३ अ. ९१ सू.) इत्यनेन नसः णत्वं निषिध्यते । अतो न णत्वम् ।

शु. य. संहि. ॥४३॥

कुनिस्त्तेशर्ठ०ग्घ्यायैव्विश्वेषान्देवानाम्पृषुतः ॥ ४० ॥ [ १०-४ ] उ. वि.

इति श्रीवाजसनेयसंहितायां चतुर्विंशोऽध्यायः ॥ २४ ॥ अ. ॥२५॥

श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्रम् ॥ शादन्दद्भिर्नवैकैका,
हिरण्यगर्भश्चतस्त्र, ऽआनोदश, मानोमित्रो, यदश्वस्या
ष्टकौ, यत्तेषडि, मानुकंद्वे, पञ्चदशसप्तचत्वारिठंशत् ॥
[अ. २५-मं. ४७ अनु. १५] हरिः ॐ ॥ शादंन्दुद्भिः ॥ ॥४३॥
शादंन्दुद्भिरवंकान्दन्तमुलैर्म्मृदुम्बस्वैंस्त्तेगान्दठंष्ट्राब्भ्याठं

सरस्वत्त्याऽअग्ग्रजिह्वञ्जिह्वायांऽउत्त्सादमंवक्क्रन्देनतालुव्वा
जह्हनुंभ्यामपऽआस्येनवृषणमाण्डाभ्यामादित्त्याँश्श्मश्श्रु
भिःपन्थानम्भ्रूभ्यान्द्यावापृथिवीव्वर्त्तोभ्यांव्विद्युतङ्कनीनका
भ्याᳪंशुक्क्लायस्वाहाकृष्ण्णायस्वाहापार्य्याणिपक्ष्माण्यवा
र्य्याऽइक्क्षवोवार्य्याणिपक्ष्माणिपार्य्याऽइक्क्षवः ॥ १ ॥
[१-१] व्वातम्प्राणेन ॥ व्वातम्प्राणेनापानेननासिकेऽउपयाम

सं. ४७ १ अवक्रन्देन तालु इत्यत्र "ऋषरेभ्यः" इत्यनेन समानपदे नस्य प्राप्तं णत्वं "तवर्गे च" (शु. य. प्रा. ३ अ. ९४ सू.) इत्यनेन निषेधान्न भवति।

मधरेणौष्ठेनसदुत्तरेणप्प्रकाशेनान्तरमनूकाशेनबाह्यन्निवेष्प्य
॥ ४४ ॥ म्मूर्ध्नास्तनयित्नुन्निर्ब्बाधेनाशनिम्मस्तिष्ष्केणविद्युतङ्कनी ॥ २५ ॥
नकाब्भ्याङ्कर्ण्णाब्भ्याꣳश्रोत्रꣳश्रोत्राब्भ्याङ्कर्ण्णौतेदनीमधर
कण्ठेनापःशुष्ष्ककण्ठेनञ्चित्तम्मन्याभिरदितिꣳशीर्ष्ष्णानि
र्ऋतिन्निर्ज्जर्ज्जल्प्येनशीर्ष्ष्णासंक्रोशैःप्प्राणान्रेष्ष्माणꣳस्तुपेन ॥ ४४ ॥
॥२॥ [१-२] मशकान्केशैः ॥ मशकान्केशैरिन्द्रꣳस्वपसावहेन

बृहस्पतिꣳ शकुनिसादेन[1] कूर्म्माञ्छफैराक्रमणꣳ स्थूराभ्या
मृक्षलाभिः कपिञ्जलाञ्जवञ्जङ्घाभ्यामद्ध्वानम्बाहुभ्याञ्जा
म्बीलेनारण्ण्यमग्निमतिरुग्भ्याम्पूषणन्दोर्भ्यामश्विनावꣳ
साभ्याꣳ रुद्रꣳ रोराभ्याम् ॥३॥ [१-२] अग्नेः पक्षतिः ॥
अग्नेः पक्षतिर्व्वायोर्न्निपक्षतिरिन्द्रस्य तृतीया सोमस्य चतुर्त्थ्य
दित्त्यै पञ्चमीन्द्राण्ण्यै षष्ठी मरुताꣳ सप्तमी बृहस्पतेरष्टम्यर्य्य

---

१ शकुनि सादेन। अत्र "भाविभ्य सः षं समानपदे" (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन सस्य षत्वप्राप्तौ "पृथिवीदिव्युपरिचर्षणिशकुनियासिभ्यः" (शु. य. प्रा. ३ अ. ८४ सू.) इत्यनेन् शकुनिपरस्य सस्य प्रकृतिभावे न षत्वम्।

म्म्णोनवमीधातुर्द्दशमीन्द्रस्यैकादशीव्वरुणस्यद्वादशीयमस्यत्र
योदशी ॥४॥ [१-४] इन्द्राग्न्योःपक्षतिः । सरस्वत्यैनि
पक्षतिर्म्मित्रस्यतृतीयापाञ्चतुर्त्थीनिर्ऋत्यैपञ्चम्म्यग्नीषोम
योःषष्ठीसर्प्पाणाꣳसप्तमीव्विष्णोरष्टमीपूष्णोनवमीत्वष्टुर्द्द
शमीन्द्रस्यैकादशीव्वरुणस्यद्वादशीयम्म्यैत्रयोदशीद्यावापृथि
व्योर्द्दक्षिणम्पार्श्वंव्विश्वेषान्देवानामुत्तरम् ॥ ५ ॥ [१-५]
मरुताꣳस्कन्धाः ॥ मरुताꣳस्कन्धाव्विश्वेषान्देवानाम्प्रथ

माकीकंसारुद्द्राणान्द्वितीयादित्त्यानान्तृतीयाव्वायोः पुच्छम्
ग्नीषोमंयोर्भासंदौक्कुञ्चौश्श्रोणिंभ्यामिन्द्राबृहस्पतीऽऊ
रुभ्यांम्मित्त्रावरुणावल्गाभ्यामाक्कमणꣳस्थूराभ्याम्बल
ङ्कुष्ठाभ्याम् ॥ ६ ॥ [ १-६ ] पूषणंव्वनिष्ठुनां । न्धाहीं
न्त्स्थूलंगुदयासर्प्पान्गुदाभिर्व्विहुतऽआन्त्रैरपोव्वस्तिनाव्वृषण
माण्डाभ्यांव्वाजिनꣳशेपेनप्प्रजाꣳरेतसाचाषान्पित्तेनप्प्रदरा
न्पायुनाकूश्म्माञ्छकपिण्डैः ॥ ७ ॥ [ १-७ ] इन्द्रस्य

क्क्रोडः ॥ इन्द्रस्यक्क्रोडोदित्त्यैपाजस्यन्दिशाञ्जत्रवोदित्त्यै
भसज्जीमूतान्हृदयौपशेनान्तरिक्षम्पुरीततानभऽउदर्य्येणच
क्क्रवाकौमतस्नाभ्यान्दिवंव्वृक्काभ्यांङ्गिरीन्प्लाशिभिरुपला
न्प्लीह्नावल्मीकान्क्लोमभिर्ग्लौभिर्गुल्मान्हिराभिःस्रव
न्तीर्ह्रदान्कुक्षिभ्याँ समुद्रमुदरेणवैश्वानरम्भस्मना ॥८॥
[१-८] विधृतिन्नाभ्या । घृतꣳरसेनापोयूष्णामरीचीर्व्वि
प्रुड्भिर्न्नीहारमूष्मणाशीनंव्वसयाप्प्रुष्वाऽअश्रुभिर्ह्रादुनी

हृषीकाभिरस्न्नारक्षांᳫ सिचित्राण्ण्यङ्गैर्न्नक्षत्त्राणिरूपेणंपृथि
वीन्त्वचाजुम्बुकायस्वाहा ॥ ९ ॥ [ १-९ ] हिरण्ण्यग
र्ब्भः सम् ॥ हिरण्ण्यगर्ब्भः समवर्त्ततागग्रेभूतस्यंजातः पतिरे
कंऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्म्मैदेवायंहवि
षाव्विधेम ॥ १० ॥ यः प्प्राणतः ॥ यः प्प्राणतोनिमिष
तोमहित्त्वैकऽइद्राजाजगतोबभूव ॥ यऽईशेऽअस्यद्विपद
श्चतुष्प्पदः कस्म्मैदेवायंहविषाव्विधेम ॥ ११ ॥ यस्येमे ।

हिमवन्तोमहित्वायस्यंसमुद्रꣳरसयासहाहुः ॥ यस्येमाः
प्प्रदिशोयस्यंबाहूकस्मैदेवायंहविषांविधेम ॥ १२ ॥ यऽ
आत्मदाः ॥ यऽआत्मदाबंलदायस्यविश्वंऽउपासंतेप्प्रशिषँ
य्यस्यदेवाः ॥ यस्यंच्छायामृतँय्यस्यंमृत्युःकस्मैदेवायंहवि
षांविधेम ॥ १३ ॥ [४-१०] आनं÷ ॥ आनोंभद्राःक्क्र
तवोयन्तुविश्वतोदंब्धासोऽअपंरीतासऽउद्भिदं÷ ॥ देवानोय ॥ ४७ ॥
थासदमिद्वृधेऽअसन्नप्प्रांयुवोरक्षितारोंदिवेदिवे ॥१४॥ देवा

नाम्भद्राः ॥ देवानाम्भद्रासुमतिर्ऋजूयतान्देवानाᳫंराति
रभिनोनिर्वर्त्तताम् ॥ देवानाᳫंसक्ख्यमुपसेदिमाव्वयन्देवान्ऽ
आयुःप्प्रतिरन्तुजीवसे ॥ १५ ॥ तान्पूर्व्वया । निविदाहू
महेव्वयम्भगम्मित्रमदितिन्दक्षमस्त्रिधम् ॥ अर्य्यमणंव्वरुणᳫं
सोमंमश्विनासरस्वतीनःसुभगामयस्क्करत् ॥ १६ ॥ तन्नः ॥
तन्नोव्वातोमयोभुव्वातुभेषजन्तन्मातापृथिवीतत्पिताद्यौः ॥

---

१ ऋजूयता । अत्र यकारे परे "ऋथोदारिथ" (शु. य. प्रा. ३ अ. ११२ सू.) इत्यनेन ह्रस्वाकारस्य दीर्घे ऋजूयता । २ उपसेदिमाव्वयम् । अत्र "अश्वरश्मिमतिसुमतिश्वसुतश्वरयध्रणिसेदिमे" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वकारे परे उपसेदिमपदघटितह्रस्वाकारस्य दीर्घाकारः ।

तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतन्धिष्ण्या युवम्
॥ १७ ॥ तमीशानम् ॥ तमीशानञ्जगतस्तस्थुषस्प
तिन्धियञ्जिन्वमवसे हूमहे वयम् ॥ पूषा नो यथा वेदसामसद्वृधे
रक्षिता पायुरदब्धः स्वस्तये ॥ १८ ॥ स्वस्ति नः ॥ स्वस्ति
न ऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ॥ स्वस्ति न
स्तार्क्ष्यो ऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्[1]दधातु ॥ १९ ॥

१ बृहस्पतिः । अत्र "तद्बृहतौ करपत्योस्तलोपश्च" (शु. य. प्रा. ३ अ. ५२ सू.) तद् बृहतैतौ करपतिशब्दयोर्यथासंख्यं सकारेण व्यवधीयेते तकारस्य लोपो भवति । अत्र बृहच्छब्दात्पतिशब्दे परे तकारस्य लोपे सकारस्य विधानम्। तत "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु.य.प्रा.४अ.१०२) इत्यनेन पकारस्य द्वित्वम् ।

पृषंदश्श्वामुरुतंः ॥ पृषंदश्श्वामुरुतंःपृश्ंनिमातरंःशुभँय्या
वांनोव्विदथेंषुजग्गमंयः ॥ अग्निजिह्वामनंवःसूरंचक्क्षसोव्वि
श्श्वेंनोदेवाऽअवसागंमन्निह ॥ २० ॥ भुद्रङ्कर्णेंभिः ।
शृणुयामदेवाभुद्रम्पंश्श्येमाक्क्षभिंर्य्यजत्राः ॥ स्थिरैरङ्गैंस्तु
ष्टुवाꣳसंस्त्तनूभिर्व्यंशेमहिदेवहिंतुँय्यदायुंः ॥ २१ ॥ शत
मित् ॥ शतमिन्नुशरदोऽअन्तिदेवायत्रांनश्श्चक्काजरसंन्तनूना
म् ॥ पुत्रासोयत्रंपितरोभवंन्तिमानोंमुद्ध्यारींरिषतायुर्ग्गन्तोंः

शु. य. संहि. ॥४९॥

॥ २२ ॥ अदि॑ति॒र्द्यौः॑ ॥ अदि॑ति॒र्द्यौरदि॑तिर॒न्तरि॑क्ष॒मदि॑ति
र्म्माता॒सपि॒तासपु॒त्त्रः॑ ॥ व्विश्वे॑दे॒वाऽअदि॑ति॒ꣳपञ्च॒जना॒ऽअदि॑
तिर्ज्जा॒तमदि॑ति॒र्ज्जनि॑त्त्वम् ॥ २३ ॥ [ १०-११ ] मानः॑ ॥
मानो॑मि॒त्रोव्वरु॑णो॒ऽअर्य्य॒मायुरिन्द्र॑ऽऋभु॒क्षामरु॒त॒ꣳपरि॑क्ख्य
न् ॥ यद्वा॒जिनो॑दे॒वजा॑तस्य॒सप्तेः॑प्प्रव॒क्क्ष्यामो॑व्वि॒दथे॑व्वी॒र्य्या॑णि
॥ २४ ॥ यन्नि॒र्णि॑जा॑ ॥ यन्नि॒र्णि॑जा॒रेक्ण॑सा॒प्प्रावृ॑तस्य॒राति
ङ्गृ॑भी॒ताम्मु॑ख॒तोनय॑न्ति ॥ सुप्प्रा॑ङ॒जोमेम्म्य॑द्वि॒श्वरू॑पऽइन्द्रा

उ. वि. अ. ॥ २५ ॥ ॥ ४९ ॥

पूष्णोऽप्प्रियमप्प्यैतिपार्थः ॥२५॥ एषच्छागः । पुरोऽअश्श्वे
नव्वाजिनापूष्णोभागोनीयतेव्विश्श्वदेव्व्यम् ॥ अभिप्प्रियँऽस्य
त्पुरोडाशमव्वीताच्चवष्टेदेनꣳसौश्श्रवसायंजिन्न्वति ॥२६॥ यद्धवि
ष्ष्यम् ॥ यद्धविष्ष्यमृतुशोदेवयानन्त्रिर्म्मानुषाः पर्य्यश्श्वन्न
यन्ति ॥ अत्त्रापूष्णःप्प्रथमोभागऽएतियज्ज्ञन्देवेब्भ्यःप्प्र
तिवेदयन्नजः ॥ २७ ॥ होताद्ध्वर्य्युः ॥ होताद्ध्वर्य्युरावयाऽ
अग्निमिन्धोग्ग्रावग्ग्राभऽउतशꣳस्तासुविप्प्रः ॥ तेनयज्ज्ञे

सं. ४८

१ अत्रापूष्णः । अत्र "पूष्णो जहीमत्स्वेष्वत्र" (शु. य. प्रा. ३ अ. १२१ सू.) इत्यनेन पूष्णः जहीमः वे इत्येतेषु पदेषु परेषु अत्रशब्दस्य दीर्घाकारः ।

नस्वरङ्कृतेनास्विष्टेनब्रह्मणाऽआपृणध्वम् ॥ २८ ॥ यूपव्रस्का
ऽउत । येयूपवाहाश्चषालँयेऽअश्वयूपायतक्षति ॥ येचार्व्व
तेपचनꣳसम्भरन्त्युतोतेषामभिगूर्त्तिर्न्नऽइन्वतु ॥ २९ ॥
उपप्र ॥ उपप्रागात्सुमन्मेधायिमन्मदेवानामाशाऽउपवीत
पृष्ठꣳ ॥ अन्वेनंविप्प्राऽऋषयोमदन्तिदेवानाम्पुष्टेचकृमासुब
न्धुम् ॥ ३० ॥ यद्वाजिनं÷ ॥ यद्वाजिनोदामसन्दानमर्व्व
तोयाशीर्षण्यारशनारज्जुरस्य ॥ यद्वाघास्यप्प्रभृतमास्येतृणꣳ

सर्व्वाताते॑ऽअपि॑दे॒वेष्व॑स्त्तु ॥ ३१ ॥ [८-१२] यद॑श्श्वस्य ।
क्क्र॒वि॑षो॒मक्षि॑काश॒यद्धा॒स्वरौ॒स्वधि॑तौ॒रि॒प्तमस्ति॑ ॥ यद्ध
स्त्तयो॑ह्शमि॒तुर्यन्न॒खेषु॒सर्व्वा॑ताते॑ऽअपि॑दे॒वेष्व॑स्त्तु ॥ ३२ ॥
यदू॑वंध्यम् ॥ यदू॑वंध्यमु॒दर॑स्यापु॒वाति॒यऽआ॒मस्य॑क्क्र॒विषो॑
ग॒न्धोऽअस्ति॑ ॥ सु॒कृ॒ता॒तच्छ॑मि॒तारः॑ कृण्वन्तू॒नमेध॑ꣳशृ॒त
पाकम्पचन्तु ॥ ३३ ॥ यत्ते॑ ॥ यत्ते॒गात्रा॑दु॒ग्निना॑पु॒च्यय
मा॑नादुभि॒शूल॒न्निह॑तस्याव॒धाव॑ति ॥ मात॒द्भूम्म्या॒मा॒श्रि॑ष

न्नमातृणेषुदेवेब्भ्यस्त्तदुशद्ब्भ्योरातमंस्त्तु ॥ ३४ ॥ येव्वाजि
नंम् ॥ येव्वाजिनंम्पारिपश्श्यन्तिपक्क्वँस्य ऽईमाहुश्सुरभिर्न्नि
र्हरेति ॥ येचार्व्वतोमा ँ सभिक्क्षामुपासंतऽउतोतेषामभिगूर्त्ति
र्न्नऽइन्न्वतु ॥३५॥ सन्नीक्क्षणम् ॥ सन्नीक्क्षणम्माँस्प्पचन्न्याऽ
उखायायापात्त्राणियूष्णणऽआसेचनानि ॥ उष्ष्मण्ण्यापिधा
नांचरूणामङ्काश्सूनाश्परिभूषन्त्त्यश्श्वम् ॥ ३६ ॥ मात्त्वा ॥
मात्त्वाग्निर्द्ध्वनयीद्धूमगन्धिर्म्मोखाभ्भ्राजन्त्यभिविक्त्तज

ग्ग्रिः ॥ इष्टंव्वीतमभिगूर्त्तंव्वषट्कृतन्तन्देवासंः प्प्रतिगृब्भ्णन्त्य
श्श्वम् ॥३७॥ निक्क्रमंणन्निषदंनम् ॥ निक्क्रमंणन्निषदंनंव्विवर्त्त
नँय्यच्च पड्वींशमर्व्वतंः ॥ यच्चं पपौ यच्चं घासिञ्जघास सर्व्वाता
तेऽअपिं देवेष्ष्वंस्तु ॥ ३८ ॥ यदश्श्वाय ॥ यदश्श्वांयव्वासंऽ
उपस्तृणन्त्यंधीवासँय्याहिरंण्ण्यान्न्यस्म्मै ॥ सन्दानमर्व्वन्त
म्पड्वींशम्प्रियादेवेष्ष्वायांमयन्ति ॥ ३९ ॥ [८-१२] यत्तें ।

१ अधीवासम् । अत्र "अश्वरश्मि०" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वासमित्यस्य वकारे परे अधि इत्यस्य ह्रस्वाकारस्य दीर्घेकारः ।

सादेमहंसाशूकृंतस्यपाष्ष्णर्याङ्वाकशंयाङ्वातुतादं ॥ स्त्रुचेवताहु
विषोऽअध्द्वरेषुसर्व्वातातेब्रह्मणासूदयामि ॥ ४० ॥ चतुस्त्रिᳪं
शद्धाजिनंः ॥ चतुस्त्रिᳪंशद्धाजिनोदेवबन्धोर्व्वङ्क्रीरश्श्वंस्यस्वधि
तिःसमेति ॥ अच्छिद्राग्गात्राव्वयुनांकृणोतपरुंष्प्परुरनुघुंष्या[1]
व्विशंस्त ॥ ४१ ॥ एकस्त्वष्टुंः ॥ एकस्त्वष्टुरश्श्वं[2]स्याव्विश
स्ताद्धायन्तारांभवतस्तथंऽऋतुः ॥ यातेगात्राणामृतुथाकृ

१ अनुघुष्याविशस्त । अत्र "अश्वरश्मिमतिसुमतिश्वसुतचारय०" (शु.य.प्रा.३अ.९८सू.) इत्यनेन वकारे परे घुष्येत्यस्य ह्रस्वाकारस्य दीर्घाकारः । २ अश्व-स्याविशस्तात्० । अत्र "अश्वरश्मिमतिसुमतिश्वसुताचारयघृणिसेदिमेन्द्रियधारयचित्रमङ्गुरवयुनाश्वस्य०" इत्यनेन वकारे परे अश्वशब्दस्याकारस्य दीर्घाकारः ।

णोमिताताऽपिण्डानाम्प्रजुंहोम्म्यग्नौ ॥ ४२ ॥ मात्त्वा ।
तपच्छ्रियऽआत्कमाऽपियन्तम्मास्वधितिस्त्तन्न्वऽआतिंष्ठिपत्ते ॥
मातेंगृध्नुरंविशस्त्तातिहायंच्छिद्राऽगात्राण्ण्यसिनामिथूकः ॥ ४३ ॥
नवै ॥ नवाऽउंऽएतन्म्रियसेनरिष्ष्यसिदेवाँ२॥ ऽइदेंषिपथि
भिः सुगेभिः ॥ हरीतेयुञ्जापृषंतीऽअभूतामुपांस्थाद्वाजीधु
रिरासंभस्य ॥ ४४ ॥ सुगव्यन्नः ॥ सुगव्यन्नोव्वाजीस्वश्र्व्यम्पुह
सःपुत्राँ२॥ ऽउतविंश्वाऽपुषंरयिम् ॥ अनागास्त्वन्नोऽअदि

१ विश्वापुष; । अत्र "विश्वसहमुव्युषवसुषु" । ( शु. य. प्रा. ३ अ. १०२ सू. ) इत्यनेन पुषपरे विश्वाकारस्य दीर्घाकारः ।

तिः कृणोतु क्षत्रन्नोऽअश्वौंव्वनताᳯं हविष्म्मान् ॥ ४५ ॥
॥५२॥ [ ६-१३ ] इमानु । कम्भुवनासीषधामेन्द्रश्च व्विश्वे च देवाः ॥ ॥ २५ ॥
आदित्यैरिन्द्रः सगणो मरुद्भिरस्म्मभ्यम्भेषजा करत् ॥ यज्ञ
ञ्च नस्तन्वञ्च प्रजाश्चादित्यैरिन्द्रः सह सीषधाति ॥ ४६ ॥
अग्ग्ने त्त्वम् ॥ अग्ग्ने त्त्वन्नोऽअन्तमऽउत त्राता शिवो भवा व्वरू
त्थ्यः ॥ व्वसुरग्निर्व्वसुश्श्रवाऽअच्छा नक्षि द्युमत्तमᳯं रयिन्दाः ॥ ॥ ५२ ॥

---

१ सीषधामेन्द्रश्च । सीसधामेन्द्रश्च इति पदम् । अत्र "भाविभ्यः सः षं समानपदे" ( शु. य. प्रा. ३ अ. ५६ सू. ) सकारस्य षत्वे रूपम् ।

तन्त्वाशोचिष्ठदीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥ ४७ ॥
[२-१४] इति श्रीवाजसनेयसंहितायां पञ्चविंशोऽध्यायः ॥२५॥
श्रीवेदपुरुषाय नमः॥ अनुवाकसूत्रम्॥ अग्निश्चपंचदशो, च्चातऽ
एकादश, द्वौ षड्विंशतिः [ अ. २६ मं. २६ अनु. २ ]॥ हरिः
ॐ ॥ अग्निश्च । पृथिवीचसन्नंतेतेमेसन्नमतामदोव्वायुश्चान्त
रिक्षञ्चसन्नंतेतेमेसन्नमतामदऽआदित्यश्चद्यौश्चसन्नंतेतेमेसन्न
मतामदऽआपश्चव्वरुणश्चसन्नंतेतेमेसन्नमतामदः ॥ सप्तसहस

दोऽअष्टमीभूंतसाधंनी ॥ सकांमाँ २ ॥ऽअंध्वंनस्कुरुसँज्ञानंमस्तु
मेमुनां ॥ १ ॥ यथेमाम् ॥ यथेमांव्वाचंङ्कल्ल्याणीमावदांनिजनें
ब्भ्यः ॥ ब्रह्मराजन्न्याब्भ्याᳬशूद्रायचार्य्यांयचस्वायचारंणा
यच ॥ प्रियोदेवानान्दक्षिणायैदातुरिहभूंयासमयम्मेकामः
समृंद्ध्यतामुपमादोनंमतु ॥ २ ॥ बृहंस्प्पतेऽअति ॥ बृहंस्प्पतेऽ
अतियदुर्य्योऽअर्हाद्युमद्विभातिक्क्रतुंमज्जनेषु ॥ यद्दीदयच्छवं ॥ ५४ ॥

---

१ अध्वनस्कुरु इति पदे। "अध्वनस्कुर्विति च" (शु. य. प्रा. ३ अ. २७ सू.) इत्यनेनात्र कुरूत्तरे पदे अध्वनो विसर्जनीयस्य सकारो जातः। तत "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन ककारस्य द्वित्त्वम्।

सऽऋतप्प्रजातुतदुस्म्मासुद्रविंणन्धेहिचित्रम् ॥ उपयामगृं
हीतोसिबृहस्प्पतंयेत्त्वैषतेयोनिर्बृहस्प्पतंयेत्त्वा ॥ ३ ॥ इन्द्र
गोमंन् ॥ इन्द्रगोमंन्निहायांहिपिबासोमंꣳशतक्क्रतो ॥
विद्यद्भिर्ग्ग्रावंभिःसुतम् ॥ उपयामगृंहीतोसीन्द्रांयत्त्वागोमंतऽ
एषतेयोनिरिन्द्रांयत्त्वागोमंते ॥ ४ ॥ इन्द्रायांहि ॥ इन्द्रा
यांहिवृत्रहन्पिबासोमंꣳशतक्क्रतो ॥ गोमंद्भिर्ग्ग्रावंभिःसुतम् ॥
उपयामगृंहीतोसीन्द्रांयत्त्वागोमंतऽएषतेयोनिरिन्द्रांयत्त्वा

गोमंते ॥ ५ ॥ ऋतावांनंव्वैश्वानरम् ॥ ऋतावांनंव्वैश्वानरमृत
स्यज्ज्योतिंषस्प्पतिंम् ॥ अजंस्त्रङ्घर्म्मर्मीमहे ॥ उपयामगृंही
तोसिव्वैश्वानरायंत्त्वैषतेयोनिंर्व्वैश्वानरायंत्त्वा ॥ ६ ॥ व्वैश्वा
नरस्यंसुमतौं । स्यांमराजाहिकम्भुवंनानामभिश्रीः ॥ इतो
जातोव्विश्वंमिदंव्विचंष्टेव्वैश्वानरोयंततेसूर्य्यैण ॥ उपयामगृंही
तोसिव्वैश्वानरायंत्त्वैषतेयोनिंर्व्वैश्वानरायंत्त्वा ॥ ७ ॥ व्वैश्वान
रोनंः ॥ व्वैश्वानरोनंऽऊतयऽआप्प्रयांतुपरावतंः ॥ अग्निरु

क्त्थेनुव्वाहंसा ॥ उपयामगृंहीतोसिव्वैश्श्वानरायंत्त्वैषतेयोनिर्व्वै
श्श्वानरायंत्त्वा ॥ ८ ॥ अग्निर्ऋषिं÷ ॥ अग्निर्ऋषिंःपवंमानंः
पाञ्चंजन्न्यंःपुरोहिंतंः ॥ तमींमहेमहागयम् ॥ उपयामगृंही
तोस्यग्ग्नयेंत्त्वाव्वर्च्चंसऽएषतेयोनिरग्ग्नयेंत्त्वाव्वर्च्चंसे ॥ ९ ॥ महाँ
२॥ऽइन्द्रं÷ ॥ महाँ२॥ऽइन्द्रोव्वज्ज्रंहस्त्तंःषोडशीशर्म्मंयच्छ
तु ॥ हन्तुंपाप्प्मानँऽय्योस्म्मान्द्वेष्टिं ॥ उपयामगृंहीतोसिमहे
न्द्रायंत्त्वैषतेयोनिर्म्महेन्द्रायंत्त्वा ॥ १० ॥ तंव्वं÷ ॥ तंव्वोंदु

स्म्ममृतीषहंव्वसोर्म्मन्दानमन्धसꣳ ॥ अभिवत्सन्नस्वसरेषुधे
नवऽइन्द्रङ्गीर्ब्भिर्न्नवामहे ॥ ११ ॥ यद्वाहिष्ठम् ॥ यद्वाहिष्ठ
न्तदग्ग्नयेबृहदर्च्चविभावसो ॥ महिषीवत्त्वद्र्यिस्त्वद्वाजाऽउ
दीरते ॥ १२ ॥ एहि ॥ एह्युषुब्ब्रवाणितेग्नऽइत्थेतरागिरः ॥
एभिर्व्वर्द्धासऽइन्दुभिꣳ ॥ १३ ॥ ऋतवस्ते ॥ ऋतवस्तेयज्ञं
वितन्वन्तुमासारक्षन्तुतेहविः ॥ संव्वत्सरस्तेयज्ञन्दधातुनꣳ 

१ अभिवत्सन् । अत्र "अश्वरश्मिमति°" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन प्राप्तस्य अभिशब्दस्य वकारे परे प्राप्तस्य दीर्घेकारस्य "अभिविल्येपं वीरविश्ववत्स°" (शु. य. प्रा. ३ अ. १०० सू.) इत्यनेन एतेषु परेषु दीर्घनिषेधान्नात्र वत्सशब्दपरे दीर्घेकारः ।

प्प्रजाङ्ग्परिंपातुनः ॥ १४ ॥ उपह्वरेगिरीणाम् ॥ उपह्वरेगिं

रीणाᳬंसंङ्गमेचंनदीनांम् ॥ धियाव्विप्प्रोऽअजायत ॥ १५ ॥

[ १५-१ ] उच्चातें ॥ उच्चातेंजातमन्धंसोदिविसद्भूम्म्यांददे ॥

उग्ग्रᳬशर्म्ममहिश्श्रवंः ॥ १६ ॥ सनंः ॥ सनऽइन्द्रांयय

ज्ज्यंवेव्वरुणायमरुद्भ्यंः ॥ व्वरिवोवित्त्परिंस्स्रव ॥ १७ ॥

एनाव्विश्श्वांनि ॥ एनाव्विश्श्वांन्न्यर्य्यऽआद्युम्म्नानिमानुंषाणाम् ॥

---

१ अत्र भूमिः आददे । "भूमेश्चाकारेऽपृक्ते" (शु. य. प्रा. ४ अ. ३८ सू.) इत्यनेनाकारेऽपृक्तपरे भूमिशब्दस्य विसर्गस्य लोपः ततो यकारे भूम्याददे ।

॥५७॥



॥ २६ ॥

सिषांसन्तोव्वनामहे ॥ १८ ॥ अनुंवीरैः ॥ अनुंवीरैरनु
पुष्ष्यास्म्मगोभिरन्न्वश्श्वैरनुसर्व्वैणपुष्ट्टैः ॥ अनुद्विपदानुचतुं
ष्प्पदाव्वयन्देवानोयज्ञ्जम्मृतुथानंयन्तु ॥१९॥ अग्न्नेपत्क्नीः ॥
अग्न्नेपत्क्नीरिहावंहदेवानांमुशतीरुपं ॥ त्वष्टांरंसोमंपीतये
॥२०॥ अभियज्ज्ञम् ॥ अभियज्ज्ञङ्गृणीहिनोग्ग्नावोनेष्टंःपिबं
ऽऋतुनां ॥ त्वᳪहिरंत्क्नधाऽअसिं ॥ २१ ॥ द्रविणोदाःपिंपी
षति ॥ जुहोतप्प्रचंतिष्ठत ॥ नेष्ट्रादृतुभिंरिष्ष्यत ॥ २२ ॥

॥ ५७ ॥

तवायम् ॥ तवायꣳसोमस्त्त्वमेह्यर्व्वाङ्शꣳश्वत्तमꣳसुमनाऽअ

स्यपाहि ॥ अस्म्मिन्न्यज्ज्ञेबर्हिष्ष्यानिषद्याँदधिष्ष्वेमञ्जठरऽ

इन्दुमिन्द्र ॥ २३ ॥ अमेवंनः ॥ अमेवंनःसुहवाऽआहिगन्त

ननिबर्हिषिसदतनारणिष्टन ॥ अथामन्दस्वजुजुषाणोऽअन्धं

सस्त्त्वष्ट्टर्देवेभिर्ज्जनिभिःसुमद्गणः ॥ २४ ॥ स्वादिष्ठयामदि

ष्ठया ॥ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया ॥ इन्द्रायपात

वेसुतः ॥ २५ ॥ रक्षोहाव्विश्श्वचर्षणिरभियोनिमयोहते ॥

द्रोणेसुधस्त्थमासंदत् ॥ २६ ॥ [११-२] ॥ २ ॥ इति श्रीवाजसनेयसंहितायां षड्विंशतितमोऽध्यायः ॥ २६ ॥ ॥ श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्रम् ॥ समास्त्वादशो, द्वौऽअस्य, पीवोऽअन्नाद्द्वादशका, वभिस्त्वैकादश, चत्त्वारः पंचचत्त्वारिꣳशत् [अ. २७ मं. ४५ अनु. ४]॥ हरिः ॐ॥ समास्त्त्वा ॥ समास्त्त्वाग्नऽऋतवोवर्द्धयन्तुसंव्वत्सराऽऋषयो यानिसत्त्या ॥ सन्दिव्येनदीदिहिरोचनेनाविश्वाऽआभाहिप्र

दिशुश्चतंस्न्रः ॥ १ ॥ सञ्चं ॥ सञ्चेद्ध्यस्वाग्ग्नेप्प्रचंबोधयैनमुच्चं
तिष्ठमहुतेसौभंगाय ॥ माचंरिषदुपसुत्तातेऽअग्ग्नेब्ब्रह्माणंस्त्ते
युशसंःसन्तुमान्न्ये ॥ २ ॥ त्वामंग्ग्ने ॥ त्वामंग्ग्नेव्वृणतेब्ब्राह्म
णाऽइमेशिवोऽअंग्ग्नेसंव्वरंणेभवानंः ॥ सपत्नहानोऽअभिमा
तिजिच्चस्वेगयेंजागृह्यप्प्रंयुच्छन् ॥३॥ इहैव ॥ इहैवाग्ग्नेऽअ
धिधारयारयिम्मात्त्वानिक्क्रंन्पूर्व्वंचितोंनिकारिणंः ॥ क्षत्रमं
ग्ग्नेसुयमंमस्त्तुतुब्भ्यंमुपसत्त्तावंर्द्धतान्तेऽअनिंष्टृतः ॥४॥ क्षत्रे

णाग्ग्ने ॥ क्षत्रेणाग्ग्ने स्वायुः सꣳरभस्व मित्रेणाग्ग्ने मित्रधेये यत
स्व ॥ सजातानाम्मध्यमस्त्था ऽएधि राज्ञामग्ग्ने विहव्यो दीदि
हीह ॥ ५ ॥ अतिनिहः ॥ अतिनिहो ऽअतिस्रिधोत्त्यचि
त्तिमत्त्यरातिमग्ग्ने ॥ विश्वाह्यग्ग्ने दुरिता सहस्वाथास्मभ्यꣳ
सहवीराꣳरयिन्दाः ॥ ६ ॥ अनाधृष्ष्यो जातवेदाः ॥ अनाधृ
ष्ष्यो जातवेदा ऽअनिष्ष्टृतो विराडग्ग्ने क्षत्रभृद्दीदिहीह ॥ विश्वा
ऽआशाः प्प्रमुञ्चन्न्मानुषीर्भियः शिवेभिरद्य परिपाहि नो वृधे

॥ ७ ॥ बृहंस्प्पतेसवितरं ॥ बृहंस्प्पतेसवितर्ब्बोधयैनह्हुसंᳪशि
तञ्चित्त्सन्तरांᳪसᳪशिशाधि ॥ ब्बर्द्धयैनम्महुतेसौभंगायव्वि
श्वंऽएनमनुंमदन्तुदेवाः ॥ ८ ॥ अमुत्त्रभूयादधं ॥ अमुत्त्रभू
यादधयद्यमस्यबृहंस्प्पतेऽअभिशंस्त्तेरमुञ्चरं ॥ प्रत्त्यौहताम
श्विनांमृत्त्युमंस्म्माहेवानांमग्नेभिषजाशचींभिरं ॥ ९ ॥ उद्व
यम् ॥ उद्व्यन्तमंसस्प्पारिस्वुरंपश्श्यन्तऽउत्त्तरम् ॥ देवन्देवत्त्रा
सूर्य्यमगंन्मज्ज्योतिरुत्त्तमम् ॥ १० ॥ [ १०-१ ] ऊर्द्धांऽअं

 

॥ ६० ॥ स्यसमिधोभवन्त्यूर्द्ध्वाशुक्क्राशोचीᳬंष्यग्ग्नेः ॥ द्युमत्तमासुप्प्र
तीकस्यसूनोः ॥ ११ ॥ तनूनपादसुरः ॥ तनूनपादसुरोव्वि ॥ २७ ॥
श्ववेदादेवोदेवेषुदेवः ॥ पथोऽअनक्क्तुमद्ध्वाघृतेन ॥ १२ ॥
मद्ध्वायज्ज्ञम् ॥ मद्ध्वायज्ज्ञन्नक्क्षसेप्प्रीणानोनराशᳬसोऽअग्ग्ने ॥
सुकृद्देवःसविताव्विश्ववारः ॥ १३ ॥ अच्छायम् ॥ अच्छाय
मेतिशवसाघृतेनेडानोव्वह्निर्न्नमसा ॥ अग्निᳬंस्स्रुचोऽअद्ध्वरे ॥ ६० ॥
षुप्प्रयत्सु ॥ १४ ॥ सयक्क्षत् ॥ सयक्क्षदस्यमहिमानमग्ग्नेः

सऽईम्मुन्द्रासुप्प्रयसं÷ ॥ व्वसुश्चेतिंष्ठोव्वसुधातंमश्च ॥१५॥ द्वारों
देवीः॥ द्वारोदेवीरन्वंस्यव्विश्श्वेव्व्रतादंदन्तेऽअग्ग्नेः ॥ उरुव्व्यचंसो
धाम्म्नापत्त्यंमानाः॥१६॥ शतम् १६००॥ तेऽअंस्य॥ तेऽअंस्य
योषंणेदिव्व्येनंयोनांऽउषासानक्क्तां ॥ इमँय्युज्ज्ञमंवतामद्ध्वर
न्नं÷ ॥ १७ ॥ दैव्व्याहोतारा ॥ दैव्व्याहोतारांऽऊर्द्ध्वमंद्ध्वरन्नो
ग्ग्नेर्ज्जिह्वामभिगृंणीतम् ॥ कृणुतन्नःस्विष्टिम् ॥ १८ ॥ तिस्रो

---

१ योनाऽउषासा । अत्र ओकारात्परस्य उष इत्यस्य "उष महोभिर्नक्तमीकारैकारौकारनकारेभ्यः" (शु. य. प्रा. ३ अ. ११९ सू.) इत्यनेन उष इत्ययं ह्रस्वो दीर्घत्वमापद्यते महोभि इत्यादिपरेषु सत्सु । तेनात्र ह्रस्वाकारस्य दीर्घाकारः ।

देवीः ॥ तिस्रोदेवीर्बर्हिरेदᳪंसदन्त्विडासरस्वतीभारती ॥
महीगृणाना ॥१९॥ तन्नः ॥ तन्नस्तुरीपमद्भुतम्पुरुक्षुत्त्वष्टा
सुवीर्य्यम् । रायस्पोषंव्विष्ष्यतुनाभिमस्मे ॥ २० ॥ व्वन
स्पतेव ॥ व्वनस्पतेवसृजाररराणस्त्मनादेवेषु ॥ अग्निर्हव्यᳪं
शमितासूदयाति ॥ २१ ॥ अग्नेस्वाहा । कृणुहिजातवेदऽ
इन्द्रायहव्यम् ॥ व्विश्वेदेवाहविरिदञ्जुषन्ताम् ॥ २२ ॥ ॥ ६१ ॥
[ १२-२ ] पीवोऽअन्नारयिवृधः । सुमेधाश्श्वेतश्शिषक्तिनि

युतामभिश्रीः ॥ तेवायवेसमनसोवितस्थुर्विश्वेन्नरं÷स्वप
त्यानिचकुः ॥ २३ ॥ रायेनु । यञ्जज्ञतूरोदसीमेरायेदेवीधि
षणांधातिदेवम् ॥ अधंवायुन्नियुतं÷सश्चतस्वाऽउतश्वेतंवसुंधि
तिन्निरेके ॥ २४ ॥ आपोह ॥ आपोहयद्बृहतीर्विश्वमायन्गर्
भन्दधानाजनयन्तीरग्निम् ॥ ततोदेवानाᳬसमवर्त्ततासुरे
कःकस्मैदेवायहविषाविधेम ॥ २५ ॥ यश्चित् ॥ यश्चिदापो
महिनापर्य्यपश्यद्दक्षन्दधानाजनयंतीर्य्यज्ञम् ॥ योदेवे

सं. ५०

ष्व॒धि दे॒वऽएक॒ऽआसी॒त्कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ २६ ॥
प्रया॑भिः ॥ प्रया॑भि॒र्य्यासि॑ दा॒श्वाꣳस॒मच्छा॑ नि॒युद्भि॑र्व्वायवि॒ष्ट
ये॑ दुरो॒णे ॥ नि नो॑ र॒यिꣳसु॒भोज॑सँयु॒वस्व॒ नि वी॒रङ्गव्य॒मश्व्यं॑ च
राधः॑ ॥ २७ ॥ आ नः॑ ॥ आ नो॑ नि॒युद्भिः॑ श॒तिनी॑भिरध्व॒रꣳ
स॑ह॒स्रिणी॑भि॒रुप॑ याहि य॒ज्ञम् ॥ वायो॑ऽअ॒स्मिन्त्सव॑ने मादय
स्व यू॒यम्पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥ २८ ॥ नि॒युत्वा॑न्वायो ॥
नि॒युत्वा॑न्वाय॒वा ग॑ह्य॒यꣳशु॒क्रो ऽअ॑यामि ते ॥ गन्ता॑सि सु॒न्व

तोगृहम् ॥ २९ ॥ व्वायोशुक्कः ॥ व्वायोशुक्कोऽअयामितेम
द्धोऽअग्ग्रन्दिविष्टिषु ॥ आयाहिसोमंपीतयेस्प्पार्होदेवनियुत्त्वं
ता ॥ ३० ॥ व्वायुरंग्ग्रेगाः ॥ व्वायुरंग्ग्रेगायंज्ज्ञप्प्रीःसाकङ्गन्म
नंसायज्ज्ञम् ॥ शिवोनियुद्धिंः शिवाभिंः ॥ ३१ ॥ व्वायोये । तेस
हस्त्रिणोरथांसस्त्तेभिरागंहि ॥ नियुत्त्वान्त्सोमंपीतये ॥ ३२ ॥
एकंयाच । दशभिंश्श्चस्वभूतेद्धाब्भ्यांमिष्टयेंव्विᳬशतीच ॥
तिसृभिंश्श्चव्वहंसेत्त्रिᳬशताचनियुद्धिंर्व्वायविहताव्विमुञ्च ॥ ३३ ॥

तवंव्वायो ॥ तवंव्वायवृतस्प्पते[1]त्त्वष्ट्टुंर्ज्जामातरद्भुत ॥ अवाᳪं
स्यावृंणीमहे॥३४॥ [ १२-३ ] अभित्त्वा। शूरनोनुमोदुंग्ग्धाऽ
इवधेनवंः॥ ईशांनमुस्यजगंतᳪं स्वर्द्दृशमीशांनमिन्द्रतस्त्थुषंः
॥ ३५ ॥ नत्त्वावांन् ॥ नत्त्वावाँ२॥ ऽअन्न्योदिव्व्योनपात्थिं
वोनजातोनजंनिष्ष्यते ॥ अश्श्वायन्तोंमघवन्निन्द्रव्वाजिनोंग
व्व्यन्तंस्त्त्वाहवामहे ॥ ३६ ॥ त्वामित् ॥ त्वामिद्धिहवांमहे



---

१ ऋतस्प्पते अत्र। "प्रकृत्या कपयोः खफयोश्च" (शु. य. प्रा. ३ अ. ११ सू.) इति प्रकृतिभावे प्राप्ते "ऋतावरौ च परयोः" (शु. य. प्रा. ३ अ. ५१ सू.) ऋतः अवरश्च यथासंख्यं पतिपरयोः सकारेण व्यवधीयते। इति सकारे तत "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२सू.) इत्यनेन पकारस्य द्वित्त्वम्।

सातौव्वाजस्यकारवं÷ ॥ त्वांव्वृत्रेष्विन्द्रसत्त्पतिन्नरस्त्त्वाङ्का
ष्ठास्वर्व्वतः ॥ ३७ ॥ सत्त्वम् ॥ सत्त्वन्नश्चित्रव्वज्ज्रहस्तधृ
ष्णुयामहस्त्त्वानोऽअद्रिवः ॥ गामश्श्वंरत्थ्यमिन्द्रसङ्किर
सत्राव्वाजन्नजिग्ग्युषे ॥ ३८ ॥ कयानः ॥ कयानश्चित्रऽ
आभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ ३९ ॥
कस्त्त्वा । सत्त्योमदानाम्मंहिष्ठोमत्त्सदन्धसः ॥ दृढाचिदा
रुजेव्वसु ॥ ४० ॥ अभीषुणं÷ ॥ अभीषुणःसखीनामविता

१ अभीषुणः । अत्र अभीषुनः । अत्र समानपदत्वाभावेन णत्वाप्राप्तौ "निषणाय°" (शु. य. प्रा. ३ अ. ८१ सू.) इत्यनेन णत्वं निपात्यते ।

जरितृणाम् ॥ शतम्भवास्यूतये ॥ ४१ ॥ सुज्ज्ञायंज्ज्ञावं ॥
सुज्ज्ञायंज्ज्ञावोऽअग्नयेगिरागिराचुदक्षसे ॥ प्रप्रंवुयमुमृतं
ज्ञातवेदसम्प्रियम्मित्रन्नशंᳩसिषम् ॥४२॥ पाहिनं÷ ॥ पाहि
नोऽअग्नऽएकयापाह्युतद्वितीयया ॥ पाहिगीर्भिस्त्तिसृभिं
रूर्ज्जाम्पतेपाहिचंतसृभिर्वसो ॥ ४३ ॥ ऊर्ज्जोनपांतम ॥
ऊर्ज्जोनपांतᳩसहिनायमंस्मयुर्द्दाशेमहुव्यदांतये ॥ भुवद्वा
जेष्ष्ववितांभुवंद्वृधऽउतत्रातातनूनांम् ॥ ४४ ॥ संवृत्त्सरो

सि । परिवत्त्सुरोसीदावत्त्सुरोसीद्वत्त्सुरोसिव्वत्त्सुरोसि ॥ उष संस्त्तेकल्पन्तामहोरात्त्रास्त्तेकल्पन्तामर्द्धमासास्त्तेकल्पन्ता म्मासास्त्तेकल्पन्तामृतवस्त्तेकल्पन्ताꣳसंव्वत्त्सरस्त्तेकल्प ताम् ॥ प्रेत्त्याऽएत्त्यैसञ्चाञ्चप्प्रचसारय ॥ सुपर्ण्णचिदंसितया देवतयाङ्गिरस्वद्ध्रुवश्सीद ॥ ४५ ॥ [ ११-४ ] इति श्रीवाज-सनेयसंहितायां सप्तविꣳशोऽध्यायः ॥ २७॥ श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्रम् ॥ होतायक्षदेकादश, देवंबर्हिर्द्दादश,

पुनरप्येवं, चत्त्वारः षट्चत्त्वारिꣳशत् [अ. २८ मं. ४६
अनु. ४ ] हरिः ॐ ॥ होताँयक्षत् ॥ होताँयक्षत्त्समिधेन्द्र
मिडस्प्पदेनाभाँपृथिव्याऽअधिं ॥ दिवोव्वर्ष्मन्त्समिंद्ध्यतऽ
ओजिष्ठश्चर्षणीसहाँव्वेत्त्वाज्ज्यंस्यहोतर्य्यज ॥ १ ॥ होतां
यक्षत्तनूनपांतमूतिभिं÷ ॥ होताँयक्षत्तनूनपांतमूतिभिर्ज्जे
तारमपराजितम् ॥ इन्द्रन्देवꣳस्वर्व्विदम्पथिभिर्म्मधुमत्त



---

१ चर्षणीसहांवेत्तु । अत्र "भाविभ्य सः पं समानपदे" (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन चर्षणीशब्दात्परस्य सस्य षत्वापत्तौ "पृथिवीदिव्युपरिचर्षणि शकुनियासिभ्यः" (शु. य. प्रा. ३ अ. ८४ सू.) इत्यनेन तत्परस्य सस्य प्रकृतिभावे न षत्वम् ।

मैत्रैराशꣳसैनुतेजंसाव्वेत्त्वाज्ज्यंस्यहोतर्य्यंज ॥ २ ॥ होतां

सक्क्षदिडांभिरिन्द्रम् ॥ होतांसक्क्षदिडांभिरिन्द्रंमीडितमाजु

ह्वानममंर्त्त्यम् ॥ देवोदेवैश्सवींर्य्योंव्वज्ज्रंहस्त्तꣳपुरन्दरोव्वेत्त्वा

ज्ज्यंस्यहोतर्य्यंज ॥ ३ ॥ होतांसक्क्षद्बर्हिषीन्द्रंम् ॥ होतां

सक्क्षद्बर्हिषीन्द्रंन्निषद्वरंव्वृंषभन्नर्य्यापसम् ॥ व्वसुंभीरुद्रैरांदि

त्त्यैःꣳसयुग्भिर्ब्बर्हिरासंदद्वेत्त्वाज्ज्यंस्यहोतर्य्यंज ॥ ४ ॥ होतां

सक्क्षदोजोन ॥ होतांसक्क्षदोजोनव्वीर्य्यꣳसहोद्वारऽइन्द्रंम

वर्द्धयन् ॥ सुप्प्रायुणाऽअस्म्मिन्न्युज्ज्ञेव्विश्श्रंयन्तामृतावृधो
द्धारऽइन्द्रायमीढुषेव्यन्त्वाज्ज्यस्युहोतुर्य्यज ॥ ५ ॥ होता
यक्क्षद्दुषेऽइन्द्रस्य । धेनूसुदुघेमातरांमुही ॥ सुवातरौनते
जंसाव्वत्समिन्द्रमवर्द्धतांव्वीतामाज्ज्यस्युहोतुर्य्यज ॥ ६ ॥ होता
यक्क्षुद्दैव्व्याहोतारा । भिषजासखायाहुविषेन्द्रम्भिषज्ज्यतः ॥
कवीदेवौप्प्रचेतसाविन्द्रायधत्तऽइन्द्रियंव्वीतामाज्ज्यस्युहोत
र्य्यज ॥७॥ होतायक्क्षत्तिस्रोदेवीः ॥ होतायक्क्षत्तिस्रोदेवी

र्न्नभेषजन्त्रयंस्त्रिधातवोपसऽइडासरस्वतीभारतीमही॰ ॥ इन्द्रं
पत्नीर्हविष्म्मतीर्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ८ ॥ होतायक्षत्
त्त्वष्टारमिन्द्रम् ॥ होतायक्षत्त्वष्टारमिन्द्रन्देवम्भिषजᳪंसुय
जङ्घृतश्रियम् ॥ पुरुरूपᳪंसुरेतसम्मघोनमिन्द्रायत्त्वष्टादधदि
न्द्रियाणिव्वेत्त्वाज्ज्यस्यहोतर्य्यज ॥९॥ होतायक्षद्वनस्पतिᳪं
शमितारम् ॥ होतायक्षद्वनस्पतिᳪंशमितारᳪंशतक्क्रतुन्धि
योजोष्टारमिन्द्रियम् ॥ मद्ध्वासमञ्जन्पथिभिःसुगेभिःस्वदाति

यज्ज्ञम्मधुनाघृतेनव्वेत्त्वाज्ज्यंस्यहोतर्य्यजं ॥१०॥ होतांयक्षद्
दिन्द्रꣳस्वाहां ॥ होतांयक्षदिन्द्रꣳस्वाहाज्ज्यंस्यस्वाहामेदंसꣳ
स्वाहांस्तोकानाꣳस्वाहास्वाहांकृतीनाꣳस्वाहांहव्यसूक्क्तीना
म् ॥ स्वाहांदेवाऽआंज्ज्यपाजुषाणाऽइन्द्रऽआज्ज्यंस्यव्यन्तुहो
तर्य्यजं ॥ ११ ॥ [ ११-१ ] देवम्बर्हिरिन्द्रंम् ॥ देवम्बर्हि
रिन्द्रꣳसुदेवन्देवैर्व्वीरवंत्स्तीर्ण्णंव्वेद्यांमवर्द्धयत् ॥ व्वस्तोर्वृत
म्प्राक्क्तोभृतꣳरायाबर्हिष्मतोत्त्यंगाद्वसुवनेव्वसुधेयंस्यव्वेतुय

जं ॥ १२ ॥ देवीर्द्वारः ॥ देवीर्द्वारऽइद्दंᳲसङ्घातेव्वीड्वीरर्य्या
मंन्नवर्द्धयन् ॥ आवत्त्सेनतरुणेनकुमारेणंचमीवतापाव्वाणᳲ
रेणुकंकाटन्नुदन्तांव्वसुवनेव्वसुधेयंस्यव्यन्तुयजं ॥ १३ ॥ देवीऽ
उषासानक्ता ॥ देवी[1]ऽउषासानक्तेन्द्रंᳲयज्ञेप्प्रयत्त्यह्वेताम् ॥
देवीर्व्विशᳲप्प्रायांसिष्टाᳲसुप्प्रीतेव्वसुधितेव्वसुवनेव्वसुधेयंस्यव्वी
ताँऽयजं ॥ १४ ॥ देवीजोष्ट्री ॥ देवीजोष्ट्रीव्वसुधितीदेवमि

---

१ देवी उषासा। अत्र "उषमहोभिर्नक्तमीकारैकारौकारनकारेभ्यः" (शु. य. प्रा. ३ अ. ११९ सू.) इत्यनेन देवीशब्दस्थेकारात्परस्य उष इत्यस्य ह्रस्वाकारस्य दीर्घाकारः।

न्द्रंमवर्द्धताम्॥ अयांव्यन्याघाद्वेषाॐस्यान्याव्वंक्षद्वसुव्वारुर्यां
णियजंमानायशिक्षितेव्वंसुवनेव्वसुधेयंस्यव्वीताँरुयज ॥ १५ ॥
देवीऽऊर्ज्जाहुती ॥ देवीऽऊर्ज्जाहुतीदुघेसुदुघेपयसेन्द्रंमवर्द्धता
म् ॥ इषमूर्ज्जमन्याव्वंक्षत्सग्धिसपीतिमन्यानवेनपूर्व्वन्दयं
मानेपुराणेननवमधांतामूर्ज्जमूर्ज्जाहुतीऽऊर्ज्जयंमानेव्वसुव्वारुर्यां
णियजंमानायशिक्षितेव्वंसुवनेव्वसुधेयंस्यव्वीताँरुयज ॥ १६ ॥
देवादैव्यां ॥ देवादैव्याहोतांरादेवमिन्द्रंमवर्द्धताम् ॥ हुताघे

शङ्सावाभांष्ट्रींव्वसुव्वारुर्यांणिय्यजंम्मानायशिकिक्षुतौव्वंसुवनैव्वसु
धेयंस्यव्वीतांरुय्यज ॥ १७ ॥ देवीस्त्तिस्त्रः ॥ देवीस्त्तिस्रास्त्ति
स्रोदेवीःपतिमिन्द्रंमवर्द्धयन् ॥ अस्पृंक्क्षद्भारंतीदिवंᳬरुद्रैर्य्य
ज्ञᳬसरंस्वतीडाव्वसुंमतीगृहान्वंसुवनैव्वसुधेयंस्यव्यन्तुय्यज
॥ १८ ॥ देवऽइन्द्रं÷ ॥ देवऽइन्द्रोनराशंसंस्त्रिवरूथस्त्रिब
न्धुरोदेवमिन्द्रंमवर्द्धयत् ॥ शतेनंशितिपृष्ठानामाहितᳬसहस्रेण
प्प्रवंर्त्ततेमित्रावरुणेदंस्यहोत्रमर्हतोबृहस्प्पातिंस्त्तोत्रमश्विना

द्धंरुर्यवंव्वसुवनेव्वसुधेयंस्यव्वेतुयजं ॥ १९ ॥ देवोदेवैः ॥ देवो
देवैर्व्वनस्प्पतिर्हिरण्ण्यपण्र्णोमधुशाखहंसुपिप्पलोदेवमिन्द्रंमव
र्द्धयत् ॥ दिवमग्ग्रेणास्पृक्क्षदान्तरिंक्क्षम्पृथिवीमंदृढंहीद्वसुव
नेव्वसुधेयंस्यव्वेतुयजं ॥ २० ॥ देवम्बर्हिः ॥ देवम्बर्हिर्व्वारितो
नान्देवमिन्द्रंमवर्द्धयत् ॥ स्वासुस्त्थमिन्द्रेणासंन्नमन्न्याब
र्हीछंष्ष्यभ्य्यभूद्वसुवनेव्वसुधेयंस्यव्वेतुयजं ॥ २१ ॥ देवोऽ ॥ ६९ ॥
अग्निः ॥ देवोऽअग्निश्स्विष्टकृद्देवमिन्द्रंमवर्द्धयत् ॥ स्विष्टकृ

र्वन्तिस्वष्टकृत्स्विष्टमुद्य करोतुनोव्वसुवनेव्वसुधेयंस्यव्वेतुयज ॥ २२ ॥ अग्निमुद्य । होतारमवृणीतायँऽयजमानः पचन्पक्तीः पचन्पुरोडाशम्बध्नन्निन्द्रायच्छागम् ॥ सूपस्थाऽअद्य देवोव्वनस्पतिरभवदिन्द्रायच्छागेन ॥ अघत्तम्मेदस्तः प्रतिपचताग्ग्रभीदवीवृधत्पुरोडाशेन ॥ त्वामद्यऽऋषे[1] ॥ २३ ॥ [ १२-२ ]

होतायक्क्षत्समिधानम्महत् ॥ होतायक्क्षत्समिधानम्महद्यशः सुसमिद्धं व्वरेण्यमग्निमिन्द्रं व्वयोधसम् ॥ गायत्रीञ्छन्दः

---

१. अ. २१, मं. ६१—त्वामद्यऽऋषऽ आ० ॥ १ ॥ इति प्रतीकः ॥

इन्द्रियन्त्र्याविङ्गांव्वयोदधद्धेत्वाज्ज्यंस्यहोतर्र्यज ॥ २४ ॥ होता
यक्क्षत्तनूनपातमुद्भिदं ॥ होतायक्क्षत्तनूनपातमुद्भिदुँय्य
ङ्गर्ब्भमदितिर्द्दधेशुचिमिन्द्रंव्वयोधसं ॥ उष्णिणहञ्छन्दऽ
इन्द्रियन्दित्त्यवाहङ्गांव्वयोदधद्धेत्वाज्ज्यंस्यहोतर्र्यज ॥ २५ ॥
होतायक्क्षदीडेन्न्यमीडितम् ॥ होतायक्क्षदीडेन्न्यमीडितंव्वृत्रह
न्तमिडाभिरीड्यहसहःसोममिन्द्रंव्वयोधसं ॥ अनुष्टुभञ्छ
न्दऽइन्द्रियम्पञ्चाविङ्गांव्वयोदधद्धेत्वाज्ज्यंस्यहोतर्र्यज ॥२६॥

॥ ७० ॥

होतायक्षत्सुबर्हिषम्पूषण्वन्तम् ॥ होतायक्षत्सुबर्हिषम्पू
षण्वन्तममर्त्त्यंᳩसीदन्तम्बर्हिषिप्प्रियेमृतेन्द्रँव्वयोधसम् ॥
बृहतीञ्छन्दऽइन्द्रियन्त्रिवत्सङ्गांव्वयोदधद्द्वेत्वाज्ज्यस्यहोतर्य्य
ज ॥२७॥ होतायक्षद्व्यचस्वतीᳬसुप्प्रायणाᳬ ॥ होतायक्ष
द्व्यचस्वतीᳬसुप्प्रायणाऽऋतावृधोद्द्वारोदेवीर्हिरण्ययीर्ब्ब्रह्म
णमिन्द्रँव्वयोधसम् ॥ पङ्क्तिञ्छन्दऽइहेन्द्रियन्तुर्य्यवाहङ्गांव्व
योदधद्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ २८ ॥ होतायक्षत्सुपेशा

सासुशिल्पे। बृंहतीऽउभेनक्तोषासानदंर्शतेविश्वमिन्द्रंव्वयो
धसंम् ॥ त्रिष्टुभुञ्छन्दंऽइहेन्द्रियम्पंष्ठवाहङ्गांव्वयोदधंद्धीता
माज्ज्यंस्यहोतुर्य्यज ॥२९॥ होतांयक्षुत्प्रचेतसादेवानांम् ॥
होतांयक्षुत्प्रचेतसादेवानांमुत्तमँय्यशोहोतांरादैव्यांकवीस
युजेन्द्रंव्वयोधसंम्॥ जगंतिञ्छन्दंऽइन्द्रियमंनड्वाहङ्गांव्वयोदधं
द्धीतामाज्ज्यंस्यहोतुर्य्यज ॥३०॥ होतांयक्षुत्पेशंस्वतीस्तिस्त्र
स्त्रः ॥ होतांयक्षुत्पेशंस्वतीस्तिस्त्रोदेवीर्हिरंण्ययीब्भारंती

बृहतीर्म्महीःपतिमिन्द्रंव्वयोधसम् ॥ व्विराजञ्छन्दऽइहेन्द्रि
यन्धेनुङ्गान्नव्वयोदधद्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३१ ॥ होता
यक्षत्सुरेतसन्त्वष्टारम् ॥ होतायक्षत्सुरेतसन्त्वष्टारम्पुष्टिव
र्द्धनꣳरूपाणिबिभ्रतम्पृथक्पुष्टिमिन्द्रंव्वयोधसम् ॥ द्विपदञ्छ
न्दऽइन्द्रियमुक्षाणङ्गान्नव्वयोदधद्वेत्त्वाज्ज्यस्यहोतर्य्यज३२॥
होतायक्षद्वनस्पतिꣳशमितारम्॥होतायक्षद्वनस्पतिꣳश
मितारꣳशतक्क्रतुꣳहिरण्ण्यपर्ण्णमुक्त्थिनꣳरशनाम्बिभ्रतंव्व

शिम्भगमिन्द्रंव्वयोधसम् ॥ ककुभञ्छन्दऽइहेन्द्रियंव्वेहतङ्गांव्व
योदधद्वेत्त्वाज्ज्यस्यहोतर्य्यज ॥ ३३ ॥ होतायक्षत्त्स्वाहाकृती
रग्निम् ॥ होतायक्षत्त्स्वाहाकृतीरग्निङ्गृहपतिम्पृथग्वरुणम्भे
षजङ्कविङ्क्षत्त्रमिन्द्रंव्वयोधसम् ॥ अतिच्छन्दसञ्छन्दऽइन्द्रि
यम्बृहदृषभङ्गांव्वयोदधद्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३४ ॥
[ ११-३ ] देवम्बर्हिः ॥ देवम्बर्हिर्व्वयोधसन्देवमिन्द्रमवर्द्ध ॥ ७२ ॥
यत् ॥ गायत्र्याच्छन्दसेन्द्रियञ्चक्षुरिन्द्रेव्वयोदधद्वसुवनेव्वसु

धेयंस्यव्वेतुयजं ॥ ३५ ॥ देवीर्द्धारः ॥ देवीर्द्धारौव्वयोधसङ्
शुचिमिन्द्रमवर्द्धयन् ॥ उष्णिहाच्छन्दसेन्द्रियम्प्राणमिन्द्रे
व्वयोदधंद्वसुवनैव्वसुधेयंस्यव्यन्तुयज ॥ ३६ ॥ देवीऽउषासा
नक्ता । देवमिन्द्रंव्वयोधसन्देवीदेवमवर्द्धताम् ॥ अनुष्टुभा
च्छन्दसेन्द्रियम्बलमिन्द्रेव्वयोदधंद्वसुवनैव्वसुधेयंस्यव्वीताँऽयजं
॥ ३७ ॥ देवीजोष्ट्री ॥ देवीजोष्ट्रीव्वसुधितीदेवमिन्द्रंव्वयो
धसन्देवीदेवमवर्द्धताम् ॥ बृहत्त्याच्छन्दसेन्द्रियꣳश्रोत्रमि

न्द्रेवयोदधंद्वसुवनेंवसुधेयंस्यवीताँऽ३यज ॥ ३८ ॥ देवीऽऊ
र्ज्जाहुंती ॥ देवीऽऊर्ज्जाहुंतीदुघेंसुदुघेपयसेन्द्रंम्वयोधसंन्देवी
देवमंवर्द्धताम् ॥ पङ्क्त्याच्छन्दसेन्द्रियꣳशुक्रमिन्द्रेवयोद
धंद्वसुवनेंवसुधेयंस्यवीताँऽ३यज ॥ ३९ ॥ देवादैव्यां ॥ देवा
दैव्याहोतारादेवमिन्द्रंवयोधसंन्देवौदेवमंवर्द्धताम् ॥ त्रिष्टुभा
च्छन्दसेन्द्रियन्त्विषिमिन्द्रेवयोदधंद्वसुवनेंवसुधेयंस्यवीता
ऽ३यज ॥ ४० ॥ देवीस्तिस्रः ॥ देवीस्तिस्रास्तिस्रोदेवीर्वयो

धसम्पतिमिन्द्रंमवर्द्धयन् ॥ जगत्त्याच्छन्दंसेन्द्रियᳪं शूषमि
न्द्रेव्वयोदधंद्वसुवनेव्वसुधेयंस्यव्यन्तुयजं ॥ ४१ ॥ देवोनराशᳪं
सं÷ ॥ देवोनराशᳪंसोदेवमिन्द्रंव्वयोधसंन्देवोदेवमंवर्द्धयत् ॥
व्विराजाच्छन्दंसेन्द्रियᳪंरूपमिन्द्रेव्वयोदधंद्वसुवनेद्वसुधेयस्य
व्वेतुयजं ४२ ॥ देवोव्वनस्पति÷ ॥ देवोव्वनस्पतिर्हेंवमिन्द्रं
व्वयोधसंन्देवोदेवमंवर्द्धयत् ॥ द्विपदाच्छन्दंसेन्द्रियम्भगमि
सं. ५२ न्द्रेव्वयोदधंद्वसुवनेव्वसुधेयंस्यव्वेतुयजं ॥ ४३ ॥ देवम्बर्हिः ॥

देवम्बर्हिर्व्वारितीनान्देवमिन्द्रँव्वयोधसन्देवन्देवमवर्द्धयत् ॥
ककुभाच्छन्दसेन्द्रियँउस्सशऽइन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्वे
तुयज ॥ ४४ ॥ देवोऽअग्निः । स्विष्टकृद्देवमिन्द्रँव्वयोधसन्दे
वोदेवमवर्द्धयत् ॥ अतिच्छन्दसाच्छन्दसेन्द्रियंक्षत्रमिन्द्रेव्व
योदधद्वसुवनेव्वसुधेयस्यव्वेतुयज ॥ ४५ ॥ अग्निमद्य ।
होतारमवृणीतायँउयजमानःपचन्पक्तीःपचन्पुरोडाशम्बध्न
न्निन्द्रायव्वयोधसेच्छागम् ॥ सूपस्थाऽअद्यदेवोव्वनस्पतिर ॥ ७४ ॥

भवदिन्द्रायव्वयोधसेच्छागेन ॥ अघुत्तम्मेदुस्त्तश्प्रतिपचुता ग्ग्रंभीदवींवृधत्पुरोडाशेन ॥ त्वांमद्यऽऋंषे ॥ ४६ ॥ [ १२-४ ]

इतिश्रीवाजसनेयसंहितायाम् अष्टाविंशोऽध्यायः ॥ २८ ॥

श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ समिद्धोऽअग्नेकादश, यदक्रन्दस्त्रयोदश, समिद्धोऽअद्यद्वादश, केतुंकृण्वँश्चतुर्व्विꣳशति, श्चत्वारःषष्टिः [ अ. २९ मं. ६० अनु. ४ ] ॥

हरिः ॐ ॥ समिद्धोऽअग्नन् ॥ समिद्धोऽअग्नन्कुदंरम्मती

१. अ. २१ ॥ मं. ६१. ॥ त्वामद्यऽऋषऽ० १ ॥ इति प्रतीकः ॥

नाङ्घृतमग्ग्नेमधुमत्त्पिन्न्वमानः ॥ व्वाजीव्वहन्न्वाजिनञ्जातवे
दोदेवानांव्वक्क्षिप्प्रियमासधस्त्थम् ॥१॥ घृतेनाञ्जन् ॥ घृते
नाञ्जन्त्सम्पथोदेवयानान्प्रजानन्न्वाज्ज्यप्प्येतुदेवान् ॥ अनु
त्त्वासप्तेप्प्रदिशःसचन्ताᳫंस्वधामस्म्मैयजमानायधेहि ॥२॥
ईड्यश्च ॥ ईड्यश्चासिव्वन्द्यश्चव्वाजिन्नाशुश्चासिमेध्ध्यश्चसप्ते ॥
अग्निष्ट्वादेवैर्व्वसुभिःसजोषाःप्प्रीतंव्वह्निंव्वहतुजातवेदाः ॥ ३॥
स्तीर्णम्बर्हिः। सुष्टरीमाजुषाणोरुपृथुप्प्रथमानम्पृथिव्व्याम् ॥

देवेभिर्युक्तमदितिः सजोषाः स्योनङ्कृण्वाना सुविते दधातु ॥ ४ ॥ एताऽउवः । सुभगा विश्वरूपा विपक्षोभिः श्रयमाणाऽ उदातैः ॥ ऋष्वाः सतीः कवषः शुम्भमाना द्वारो देवीः सुप्राय णा भवन्तु ॥ ५ ॥ अन्तरा मित्रावरुणा ॥ अन्तरा मित्रावरु णा चरन्ती मुखँ यज्ञानामभि संविदाने ॥ उषासावाꣳसुहिर ण्ये सुशिल्पेऽऋतस्य योनाविह सादयामि ॥ ६ ॥ प्रथमावा म् ॥ प्रथमावाꣳसरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि वि

श्वां ॥ अपिंप्प्रयन्नोदंनावाम्मिमानाहोतांराज्ज्योतिं÷प्प्रदिशां
दिशन्तां ॥ ७ ॥ आदित्त्यैर्न्नो÷ ॥ आदित्त्यैर्न्नोभारंतीव्वष्टुय
ज्ञꣳसरंस्वतीसहरुद्रैर्न्नंऽआवीत् ॥ इडोपंहूताव्वसुंभिꣳसजोषां
यज्ञन्नोदेवीरमृतेषुधत्त ॥८॥ त्वष्टांव्वीरम् ॥ त्वष्टांव्वीरन्देवकां
मञ्जजानत्त्वष्टुरर्व्वाजायतऽआशुरश्वं÷ ॥ त्वष्टेदंव्विश्वम्भुवंनञ्ज
जानव्बहो꞉कर्त्तारंमिहयंक्षिहोतꣳ ॥९॥ अश्वोघृतेनं ॥ अश्वोघृ
तेनत्त्मन्न्यासमंक्तऽउपंदेवाँ २॥ऽऋतुश꞉पाथंऽएतु ॥ व्वनस्प्प

तिर्द्देवलोकम्प्रजानन्नग्निनाहव्यास्वदितानिवक्षत् ॥ १० ॥
प्रजापतेस्तपसा । वावृधानःसद्योजातोदधिषेयज्ञमग्ने ॥
स्वाहाकृतेनहविषापुरोगायाहिसाध्याहविरदन्तुदेवाः ॥ ११ ॥
[ ११-१ ] यदक्रन्दः । प्रथमञ्जायमानऽउद्यन्त्समुद्रादु
तवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यम्महि
जातन्तेऽअर्वन् ॥ १२ ॥ यमेनदत्तम् ॥ यमेनदत्तन्त्रितऽ
एनमायुनगिन्द्र[1]ऽएणम्प्रथमोऽअध्यतिष्ठत् ॥ गन्धर्वोऽअस्य

१ इन्द्रऽएणम् । अत्र असमानपदत्वेनाप्राप्तौ "निषण्णाय रथवाहणमिन्द्रऽएणम्०" ( शु. य. प्रा. ३ अ. ८७ सू. ) इत्यनेन णत्वं निपात्यते ।

रशनामगृभ्णन्त्सूरादश्वंवसवोनिरतष्ट ॥ १३ ॥ असिय
मः ॥ असियमोऽअस्यादित्योऽअर्वन्नसित्रितोगुह्येनव्रतेन ॥
असिसोमेनसमयाविपृक्तऽआहुस्तेत्रीणिदिविबन्धनानि
॥ १४ ॥ त्रीणिते ॥ त्रीणितऽआहुर्दिविबन्धनानित्रीण्यप्सु
त्रीण्यन्तःसमुद्रे ॥ उतेवमेवरुणश्छन्त्स्यर्वन्यत्रातऽआहुः
परमञ्जनित्रम् ॥ १५ ॥ इमातेवाजिन् ॥ इमातेवाजिन्नव
मार्जनानीमाशफानाꣳसनितुर्निधाना ॥ अत्रातेभद्रारश

नाऽअंपश्श्यमृतस्य्ययाऽअंभिरक्क्षंन्तिगोपाः ॥ १६ ॥ आत्क्मा
नंन्ते ॥ आत्क्मानंन्तेमनंसारादंजानामवोदिवापतयंन्तम्प
तङ्गम् ॥ शिरोऽअपश्श्यम्पथिभिं÷सुगेभिररेणुभिर्ज्जेहमान
म्पतत्रि ॥ १७ ॥ अंत्रांते । रूपमुत्तममंपश्श्यञ्जिगींषमा
णमिषऽआपदेगोः ॥ यदातेमर्त्तोऽअनुभोगमानडादिद्ग्रसिं
ष्ठऽओषंधीरजीगः ॥ १८ ॥ अनुत्त्वा ॥ अनुत्त्वारथोऽअनु
मर्य्योऽअर्व्वन्ननुगावोऽनुभगं÷कनीनाम् ॥ अनुव्व्रातासस्त्तवं

१ अत्राते । अत्र ते परे अत्रशब्दस्य ह्रस्वाकारस्य "पूर्णो जहीमस्तेष्वत्र" ( शु. य. प्रा. ३ अ. १२१ सू. ) इत्यनेन दीर्घः ।

शु. य. संहि॰ ॥ ७८ ॥

सुकस्व्यमीयुरनुदेवाममिरेव्वीरुर्ष्यन्ते ॥ १९ ॥ हिरण्ण्यशृङ्गो उ. वि. अ.
यं ॥ हिरण्ण्यशृङ्गोयोऽअस्यपादामनोजवाऽअवरऽइन्द्रऽ ॥ २९ ॥
आसीत् ॥ देवाऽइदस्यहविरद्यमायन्योऽअर्वन्तम्प्रथमोऽअ
द्ध्यतिष्ठत् ॥ २० ॥ ईर्म्मान्तासःसिलिकमद्ध्यमासः ॥ ईर्म्मा
न्तासःसिलिकमद्ध्यमासःसꣳशूरणासोदिव्व्यासोऽअत्त्याः ॥
हꣳसाऽइवश्श्रेणिशोयतन्तेयदाक्षिषुर्द्दिव्व्यमज्ममश्श्वाः ॥ ७८ ॥
॥ २१ ॥ तवशरीरम् ॥ तवशरीरम्पतयिष्ण्णवर्व्वन्तवचित्तं

व्वातंऽइवड्क्रंजीमान् ॥ तवशृङ्गाणिव्विष्ठिंतापुरुत्त्रारण्ण्येषुजर्ब्भुं
राणाचरन्ति ॥२२॥ उपप्प्र ॥ उपप्प्रागाच्छसंनंव्वाज्ज्यव्वींदेवद्रीं
चामनंसादीद्धानः ॥ अजःपुरोनीयतेनाभिरस्यानुपश्श्चात्कव
योंयन्तिरेभाः ॥२३॥ उपप्प्र ॥ उपप्प्रागात्त्परमंय्यत्सधस्त्थम
र्व्वाँ २॥ऽअच्छांपितरम्मातरंञ्च ॥ अद्यादेवाञ्जुष्टंतमोहिगम्म्याऽ
अथाशांस्त्तेदाशुषेव्वार्य्याणि ॥२४॥ [१३-२] समिद्धोऽअद्य ।

१ अजिमान् । अत्र "शृणुतत्विषिध्रजिभयत पिबेतस्तनिष्ठरक्षा मकारे" (शु. य. प्रा. ३ अ. ११७ सू.) इत्यनेन मकारे परे एते दीर्घा भवन्ति तेन दीर्घे अजीमान् ।

मनुषोदुरोणेदेवोदेवान्यजसिजातवेदः ॥ आचवहमित्रमह
श्चिकित्त्वान्त्वन्दूतःकविरसिप्प्रचेताः ॥२५॥ तनूनपात्त्पथः ॥
तनूनपात्त्पथऽऋतस्ययानान्मद्ध्वासमञ्जन्त्स्वदयासुजिह्व ॥ म
न्मानिधीभिरुतयज्ञमृन्धन्देवत्राचकृणुह्यद्ध्वरन्नः ॥२६॥ नरा
शꣳसस्यमहिमानम् ॥ नराशꣳसस्यमहिमानमेषामुपस्तोषा
मयजतस्ययज्ञैः ॥ येसुक्क्रतवःशुचयोधियन्धाःस्वदन्तिदेवा
ऽउभयानिहव्व्या ॥२७॥ आजुह्वानऽईड्यः ॥ आजुह्वानऽ

ईड्योव्वन्द्यश्श्चायांह्यग्नेव्वसुंभिꣳसजोषाꣳ॥ त्वन्देवानांमसियह्व
होतासऽएंनान्यक्क्षीषितोयजीयान्॥२८॥ प्राचीनंम्बर्हिः। प्प्र
दिशांपृथिव्यावस्तोरस्यावृंज्ज्यतेऽअग्ग्रेऽअह्नाम्॥ व्युंप्प्रथतेव्वि
तरंव्वरीयोदेवेब्भ्योऽअदितयेस्योनम्॥२९॥ व्यचंस्वतीरुर्व्विया।
श्श्रंयन्ताम्पतिंब्भ्योनजनंयꣳशुम्भंमानाꣳ॥ देवीर्द्वारोबृहतीव्वि
र्व्विश्श्वमिन्वादेवेब्भ्योभवतसुप्प्रायणाꣳ॥३॥० आसुष्ष्वयन्ती।य
जतेऽउपाकेऽउषासानक्क्तासदतान्नियोनौ॥ दिव्येयोषणेबृहती

१ उपाकेऽउपासा। अत्र एकारात्परस्य उष इत्यस्य ह्रस्वाकारस्य "उषमहोभिर्नक्ते०" (शु. य. प्रा. ३ अ. ११९ सू.) इत्यनेन दीर्घाकारः।

सं. ५३

सुरुक्मेऽअधिश्श्रियꣳशुक्रपिशन्दधाने॥३१॥ दैव्याहोतारा।
प्प्रथमासुवाचामिमानायज्ज्ञम्मनुषोयजध्ध्यै॥ प्रचोदयन्ताव्वि
दथेषुकारूप्प्राचीनञ्ज्योतिः प्प्रदिशादिशन्ता॥३२॥ आनः॥
आनोयज्ज्ञम्भारतीतूयमेत्विडामनुष्ष्वदिहचेतयन्ती॥ तिस्रो
देवीर्बर्हिरेदꣳस्योनꣳसरस्वतीस्वपसꣳसदन्तु॥३३॥ यऽइमे।
द्यावापृथिवीजनित्रीरूपैरपिꣳशद्भुवनानिव्विश्श्वा॥ तम[1]द्यहोत ॥८०॥

---

१ अद्यहोतरि। अत्र "अद्य तं हकारचकारभवतवृणीमहेदेवेषु" (शु. य. प्रा. ३ अ. ११५ सू.) इत्यनेन हकारे परे दीर्घे प्राप्ते "नहोतरि" (शु. य. प्रा. ३ अ. ११६ सू.) इत्यनेन निषेधान्न दीर्घः।

रिषितोयजीयान्देवन्त्वष्टारमिहयंक्षिविद्वान् ॥ ३४ ॥ उपाव

सृजत्क्मन्न्यां । समञ्जन्देवानाम्पाथऽऋतुथाहवीᳪंषि ॥ व्वनं

स्प्पतिः शमितादेवोऽअग्निः स्वदन्तुहव्यम्मधुनाघृतेन॥३५॥

सद्योजातः॥सद्योजातोव्यमिमीतयज्ञमग्निर्देवानामभवत्पु

रोगाः ॥ अस्यहोतुः प्प्रदिश्यृतस्यव्वाचिस्वाहाकृतᳪं हविरद

न्तुदेवाः ॥३६॥ [ १२-३ ] केतुङ्कृण्णवन् ॥ केतुङ्कृण्णवन्नकेत

---

१ वनस्प्पतिः । अत्र "पत्यौ च सकारेण" (शु. य. प्रा. ३ अ. ५० सू.) इत्यनेन पतिशब्दे परे वनशब्दः सकारेण व्यवधीयते । तत ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ३ अ. १०२ सू.) इत्यनेन पकारस्य द्वित्वे रूपम् । "प्रकृत्या कपयोः खफयोश्च" (शु. य. प्रा. ३ अ. ११ सू.) इत्यस्यापवादोऽयम् ।

वेपेशोमर्य्याऽअपेशसे ॥ समुषद्भिरजायथाः ॥३७॥ जीमूत
स्येवभवति ॥ जीमूतस्येवभवतिप्प्रतीकँय्यद्वर्म्मीयातिसमदा
मुपस्त्थे ॥ अनाविद्धयातन्न्वाजयत्त्वꣳसत्त्वाव्वर्म्मणोमहिमा
पिपर्त्तु ॥ ३८ ॥ धन्न्वनागाः ॥ धन्न्वनागाधन्न्वनाजिञ्जयेमध
न्न्वनातीव्व्राःसमदोजयेम ॥ धनुꣳशत्त्रोरपकामङ्कृणोतिधन्न्व
नासर्व्वाःप्प्रदिशोजयेम ॥ ३९ ॥ व्वक्ष्यन्तीवेत् ॥ व्वक्ष्यन्ती
वेदागनीगन्तिकर्ण्णम्प्प्रियꣳसखायम्परिषस्वजाना ॥ सोषेव

शिङ्क्ते्व्वितताधिधन्वत्त्वुयाऽइ्य॑समंनेपारयंन्ती ॥ ४० ॥ तेऽ
आचरंन्ती ॥ तेऽआचरंन्तीसमंनेवयोषांमातेवपुत्त्रम्बिभृता
मुपस्त्थें ॥ अपशत्रूंन्व्विद्ध्यतार्ठंसंविदानेऽआर्त्नींऽइमेव्वि
ष्फुरन्तींऽअमित्त्रांन् ॥ ४१ ॥ बह्वीनाम्पिता । बहुरंस्यपुत्त्र
श्चिश्चाकृंणोतिसमंनावगत्त्यं ॥ इषुधिःसङ्काःपृतंनाश्चसर्व्वाः
पृष्ठेनिनंद्धोजयतिप्प्रसूंतः ॥ ४२ ॥ रथेतिष्ठंन् ॥ रथेतिष्ठंन्नय
तिव्वाजिनंःपुरोयत्त्रंयत्त्रकामयंतेसुषारथिः ॥ अभीशूंनाम्म

हिमानम्पनायतमनः पश्चादनुयच्छन्तिरश्मयः ॥ ४३ ॥
तीव्रान्घोषान् ॥ तीव्रान्घोषान्कृण्वतेवृषपाणयोश्वारथेभिः
सहवाजयन्तः ॥ अवक्रामन्तःप्रपदैरमित्रान्क्षिणन्तिशत्रूँ
१॥ऽरनपव्ययन्तः ॥४४॥ रथवाहणꣳहविः ॥ [1]रथवाहणꣳ
हविरस्यनामयत्रायुधन्निहितमस्यवर्म्म ॥ तत्रारथमुपशग्मꣳ
सदेमविश्वाहावयꣳसुमनस्यमानाः ॥ ४५ ॥ स्वादुषꣳसदः ॥ ८२ ॥

---

१ रथवाहणः। अत्र थकारेण व्यवधानाण्णत्वाप्राप्तौ "निषण्णाय रथवाहणमिन्द्रऽएणम्परिणीयते समिन्द्रणऽउरुष्याणो रक्षाणः पूणःपुणःपूणासस्त्या स्त्वर्णास्थूरिणौप्रणऽआयूंषि" (शु. य. प्रा. ३ अ. ८७ क.) इत्यनेन णत्वं निपात्यते।

पितरः ॥ स्वादुषंसदः पितरो वयोधाः कृच्छ्रेश्रितः[1] शक्तीवन्तो गभीराः ॥ चित्रसेना इषुबला अमृध्राः सतोवीरा उरवो व्रातसाहाः ॥ ४६ ॥ ब्राह्मणासः पितरः ॥ ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा ॥ पूषा नः पातु दुरितादृतावृधो रक्षा[2] माकिर्नो अघशंस ईशत ॥ ४७ ॥ सुपर्णं वस्ते । मृगो अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता ॥

१ शक्तीवन्तः । अत्र "अश्वरश्मिमतिसुमति०" (शु. य. प्रा. ३ अ. ९८ क.) इत्यनेन वन्त इति वकारे परे शक्तिशब्दस्य ह्रस्वेकारस्य दीर्घेकारः ।
२ रक्षामा । अत्र "शृणुतस्विषिभ्रजि" (शु. य. प्रा. ३ अ. १११ सू.) इत्यनेन माकारे परे रक्षशब्दस्य ह्रस्वाकारस्य दीर्घाकारः । तेन रक्षामा ।

॥ ८३ ॥ यत्रा[1]नरः सम्पतन्ति कुमारा विशिखाइव । तत्रा नो ब्रह्मणस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ॥ ॥ २९ ॥

यत्रानरः सङ्खविचद्रवन्तितत्रास्ममभ्यामिषंवः शर्म्मयः सन्
॥ ४८ ॥ ऋजीतेपरि । वृङ्धिनोऽश्मांभवतुनस्तनूः ॥ सोमोऽ
अधिब्रवीतुनोदितिः शर्म्मयच्छतु ॥ ४९ ॥ आजङ्घन्ति ॥
आजङ्घन्तिसान्वेषाञ्जघनाँ२॥ऽउपजिघ्नते ॥ अश्वाजनिप्र
चेतसोश्वान्त्समत्सुचोदय ॥ ५० ॥ अहिरिवभोगैः । पर्य्येति
बाहुञ्ज्यायाहेतिम्परिबाधमानः ॥ हस्तघ्नोविश्वावयुना
निविद्वान्पुमान्पुमांसम्परिपातुविश्वतः ॥ ५१ ॥ वनं ॥ ८३ ॥

[1] यत्रानरः । अत्र "नरस्सस्तऽऋपीत्नस्तऽआहुर्नियुक्तिष्पु यत्र" (शु. य. प्रा. ३ अ. १२२ सू.) इत्यनेनात्र नरपरे यत्रशब्दाकारस्य दीर्घः ।

स्प्पतेव्वीड्वङ्गः ॥ व्वनस्प्पतेव्वीड्वङ्गोहिभूयाऽअस्म्मत्त्सखाप्प्र
तरणःसुवीरः ॥ गोभिःसन्नद्धोऽअसिव्वीडयस्वास्त्थाता
तेजयतुजेत्त्वानि ॥ ५२ ॥ दिवःपृथिव्याः ॥ दिवः
पृथिव्याःपर्य्योजऽउद्भृतंव्वनस्प्पतिब्भ्यःपर्य्याभृतꣳसहः ॥
अपामोज्ज्मानम्परिगोभिरावृतमिन्द्रस्यव्वज्ज्रꣳहविषारथँय्य
ज ॥ ५३ ॥ इन्द्रस्यव्वज्ज्रः ॥ इन्द्रस्यव्वज्ज्रोमरुतामनीक

१ दिवःपृथिव्याः । इत्यत्र "दिवोऽककुत्पृथिव्योः" (शु. य. प्रा. ३ अ. १८ सू.) इत्यनेनाककुत्पृथिव्योः सत्वनिषेधाद्विसर्जनीय एव नान्यत् ।

॥ ८४ ॥ म्मित्रस्यगर्ब्भोव्वरुणस्यनाभिः॑ ॥ सेमान्नोहृव्यदातिञ्जुषाणो
देवरथप्प्रतिहृव्यागृभाय ॥ ५४ ॥ उपश्वासय । पृथिवीमुत
द्यामपुरुत्रातेमनुताव्विष्ठितञ्जगत् ॥ सदुन्दुभेसजूरिन्द्रेणदेवै
र्दूराद्दवीयोऽअपसेधशत्रून् ॥ ५५ ॥ आक्क्रन्दय ॥ आक्क्रन्द
यबलमोजोनऽआधानिष्टनिहिदुरिताबाधमानः॑ ॥ अपप्प्रो

१ सः इमाम् इति पदद्वयम् । अत्र "सऽओषधीमयोः" (शु. य. प्रा. ३ अ. १५ सू.) इत्यनेन इमे परे सपदघटितस्य विसर्जनीयस्य "लोपे च गुणे सेमाम्" इति सिद्ध्यति । २ निष्टनिहि । अत्र "नेः स्त्यास्तनोः" (शु. य. प्रा. ३ अ. ७० सू.) नेरुपसर्गात्परस्य स्त्यास्तनयोः सकारस्य षकारः । इति स्तनोः सकारस्य षत्वे ष्टुत्वे "ऊष्मान्तस्थाभ्यश्च स्पर्शः"। (शु. य. प्रा. ४ अ. १०० सू.) इत्यनेन द्वित्वम् ।

थदुन्दुभेदुच्छुनाऽइतऽइन्द्रस्यमुष्टिरसिवीडयस्व ॥ ५६ ॥
आमूः ॥ आमूरजप्प्रत्त्यावर्त्तयेमाःकेतुमद्दुन्दुभिर्व्वावदी
ति ॥ समश्वपर्ण्णाश्चरन्तिनोनरोस्म्माकमिन्द्ररथिनोजयन्तु
॥ ५७ ॥ आग्नेयःकृष्णग्ग्रीवः । सारस्वतीमेषीबब्भ्रुः
सौम्म्यःपौष्णःश्यामःशितिपृष्ठोबार्हस्पत्त्यःशिल्पोवैश्व

---

१ रथिनो जयन्तु । अत्र "ऋषरेभ्यः०" (शु. य. प्रा. ३ अ. ८५ सू.) इत्यनेन "स्वरयवहकपैश्च" (शु. य. प्रा. ३ अ. ८६ सू.) इत्यनेनैतैर्व्यवधानविहितस्य णत्वस्य विहितारिक्तशथकारव्यवधानेनाप्राप्तावपि "शिलिसिवर्गमध्यमव्यवहितोऽपि" ( शु. य. प्रा. ३ अ. ९६ सू. ) इत्यनेन प्रकृतिभावो विधीयते। इदं शिष्यबुद्धिव्युत्पादनार्थम्।

देवऽऐन्द्रोरुणोमारुतश्कुल्म्माषऽऐन्द्राग्नश्सꣳहितोधोरामः
सावित्रोवारुणश्कृष्णऽएकशितिपात्पेत्वः ॥ ५८ ॥ अग्न
येनीकवते ॥ अग्नयेनीकवतेरोहितानिरनड्वानधोरामौसावि
त्रौपौष्णौरजतनाभीवैश्वदेवौपिशङ्गौतूपरौमारुतश्कुल्म्माष
ऽआग्नेयश्कृष्णोजश्सारस्वतीमेषीवारुणश्पेत्वः ॥ ५९ ॥
अग्नयेगायत्रायत्रिवृतेराथन्तरायाष्टाकपालऽइन्द्रायत्रैष्टु ॥ ८५ ॥
भायपञ्चदशायबार्हतायैकादशकपालोविश्वेभ्योदेवेभ्योजा

गतेभ्य॑ः सप्तद॒शेभ्यो॒ वैरू॒पेभ्यो॒ द्वाद॑शकपालो मि॒त्रावरु॑णाभ्या॒मानु॑ष्टुभाभ्यामेकवि॒ꣳशाभ्यां॒ वैरा॒जाभ्यां पय॒स्या॒ बृह॒स्पत॑ये पाङ्क्ता॑य त्रि॒ण॒वाय॑ शाक्व॒राय॑ च॒रुः स॑वि॒त्र औष्णि॑हाय त्रयस्त्रि॒ꣳशाय॑ रैव॒ताय॒ द्वाद॑शकपालः प्राजाप॒त्य॒श्च॒रुरदि॑त्यै॒ विष्णु॑पत्न्यै च॒रुर॒ग्नये॑ वैश्वान॒राय॒ द्वाद॑शकपा॒लोऽनु॑मत्त्या अ॒ष्टाक॑पालः ॥६०॥ [२४-४]॥ इतिश्रीवाजसनेयसंहितायामेकोनत्रिंशोऽध्यायः ॥२९॥ श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्र-

सं. ५४

म् ॥ देवसवितः षट्, तपसेकौलालꣳषोडश, द्वौ द्वाविꣳशतिः ॥
[अ. ३० मं. २२ अ. २] हरिःॐ॥ देवसवितः ॥ देवसवितः
प्प्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय ॥ दिव्योगन्धर्वः केतपूः
केतन्नःपुनातुव्वाचस्प्पतिर्व्वाचन्नःस्वदतु ॥ १ ॥ तत्सवितुः ॥
तत्सवितुर्व्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनः प्प्रचो
दयात् ॥ २ ॥ व्विश्वानिदेव । सवितर्दुरितानिपरासुव ॥
यद्भद्रन्तन्नऽआसुव ॥ ३ ॥ व्विभक्तारꣳहवामहे ॥ व्विभ

क्त्कारꣳ हवामहे व्वसोश्चित्रस्य राधसः ॥ सवितारन्नृचक्षसम्
॥४॥ ब्रह्मणे ब्राह्मणम् ॥ ब्रह्मणे ब्राह्मणङ्क्षत्राय राजन्यम्म
रुद्भ्यो व्वैश्श्यन्तपसे शूद्रन्तमसे तस्क्करन्नारकाय व्वीरहणम्पा
प्प्मने क्क्लीबमाक्क्रयायाऽअयोगूङ्कामाय पुँश्चलूमतिक्क्रुष्टाय
मागधम् ॥ ५ ॥ नृत्ताय सूतम् ॥ नृत्ताय सूतङ्गीताय शैलूषन्ध
र्म्माय सभाचरन्नरिष्ठायै भीमलन्नर्म्माय रेभꣳ हसाय कारिमान
न्दाय स्त्रीषखम्प्रमदे कुमारीपुत्रम्मेधायै रथकारन्धैर्य्याय तक्क्षा

णम् ॥ ६ ॥ [ ६-१ ] तपसेकौलालम् ॥ तपसेकौलालम्मा
यायैकर्मारꣳरूपायमणिकारꣳशुभेवपꣳशरव्यायाऽइषुका
रꣳहेत्यैधनुष्कारङ्कर्मणेज्याकारन्दिष्टायरज्जुसर्जम्मृत्यवे
मृगयुमन्तकायश्वनिनम् ॥ ७ ॥ नदीभ्यःपौञ्जिष्ठम् ॥
नदीभ्यःपौञ्जिष्ठमृक्षीकाभ्योनैषादम्पुरुषव्याघ्रायदुर्मदं
गन्धर्वाप्सरोभ्योव्रात्यम्प्रयुग्भ्यऽउन्मत्तꣳसर्पदेवजने
भ्योऽप्रतिपदमयेभ्यःकितवमीर्यतायाऽअकितवम्पिशाचे

ब्भ्योबिदलकारीँय्यातुधानेब्भ्यःकण्टकीकारीम् ॥८॥ सन्ध
यैजारम्॥ सन्धयैजारङ्गेहायौपपतिमार्त्त्यैपरिवित्तन्निर्ऋत्त्यैप
रिविविदानमराद्ध्याऽएदिधिषुःपतिन्निष्कृत्त्यैपेशस्कारीꣳ
सञ्ज्ञानायस्मरकारीम्प्रकामोद्यायोपसदंव्वर्ण्णायानुरुधम्ब
लायोपदाम्॥९॥ उत्त्सादेब्भ्यःकुब्जम्॥ उत्त्सादेब्भ्यःकुब्ज
म्प्रमुदेव्वामनन्द्वार्ब्भ्यःस्स्रामꣳस्वप्नायान्धमधर्म्मायबधिरम्प
वित्त्रायभिषजम्प्रज्ज्ञानायनक्क्षत्रदर्शमाशिक्क्षायैप्प्रश्निनमु

पशिक्षायांऽअभिप्प्राश्निनंम्मर्य्यादायैप्प्रश्नविवाकम् ॥ १० ॥
अर्म्मैब्भ्योहस्तिपम् ॥ अर्म्मैब्भ्योहस्तिपञ्जवायांश्वपम्पुष्ट्यै
गोपालंव्वीर्य्यायाविपालन्तेजंसेजपालमिरांयैकीनाशंङ्कीलाला
यसुराकारम्भद्रायंगृहपᳪंश्रेयंसेवित्तधमाध्ध्यंक्क्ष्यायायानुक्क्ष
त्तारंम् ॥ ११ ॥ भायैदार्व्वाहारम् ॥ भायैदार्व्वाहारम्प्रभायांऽअ
ग्न्येधम्ब्रध्नस्यंव्विष्टपायाभिषेक्तारंव्वर्षिष्ठायनाकायपरिवेष्टा
रन्देवलोकायंपेशितारम्मनुष्ष्यलोकायंप्प्रकरितारᳪसर्व्वेब्भ्यो ॥ ८८ ॥

लोकेभ्यंऽउपसेक्तारमवंऽऋत्त्यैव्वधायोपमन्थितारम्मेधाय
[1]व्वासःपल्पूलीम्प्रकामायरजयित्रीम् ॥ १२ ॥ ऋतयेस्त्तेनहृ
दयम् ॥ ऋतयैस्त्तेनहृदयंव्वैरहत्त्यायपिशुनंव्विविक्त्त्यैक्ष
त्तारमौपद्रष्ट्र्यायानुक्षत्तारम्बलायानुचरम्भूम्म्नेपरिष्क्क
न्दम्प्रियायप्प्रियवादिनमरिष्ट्ट्याऽअश्वसादᳪस्वर्ग्गायलोकाय
भागदुघंव्वर्षिष्ठायनाकायपरिवेष्टारम् ॥ १३ ॥ मन्न्यवेयस्त्ता

---

१. वासः पल्पूलीम् । अत्र "समानपदे" (शु. य. प्रा. ३ अ. ३० सू.) इत्यनेन षकारे प्राप्ते "वाजपतिर्वासऽएदिधिषुरन्तःपर्शव्येनान्तः पार्श्व्यमिति च" (शु. य. प्रा. ३ अ. ३८ सू.) इति सूत्रेण वासशब्दघटितविसर्जनीयस्य षकारनिषेधः ।

पम् ॥ मन्न्यवैयस्त्तापङ्क्तोधांयनिसरँस्योगांयस्रोक्त्तारॠशोकां
याभिसत्त्तीरङ्क्षेमांयाब्रिमोक्त्तारंमुत्त्कूलनिकूलेब्भ्यांस्त्रिष्ठिनंब
पुंषेमानस्कृत७ शीलांयाञ्जनीकारीन्निर्ऋत्त्यैकोशकारीँस्युमा
यासूम् ॥ १४ ॥ सुमायंसमसूम् ॥ सुमायंसमसूमर्थर्व
ब्भ्योवंतोकाठंसंवत्त्सरायंपर्स्यांयिणीम्पारिवत्त्सरायाविंजाता
मिदावत्त्सरायातीत्त्वंरीमिद्धत्त्सरायांतिष्क्ककद्दंरींबत्त्सरायाब्वि
जंर्ज्जराठंसंवत्त्सरायपलिंक्कनीमृभुब्भ्योंजिनसन्ध६साद्धेब्भ्यं

१चर्म्मम्न्नम् ॥ १५ ॥ सरोभ्योधैवरम् ॥ सरोभ्योधैवरमु
पस्त्थावराभ्योदाशंवैशन्ताभ्योबैन्दन्नड्वलाभ्यःशौष्क्क
लम्पारायमार्ग्गारमवारायकेवर्त्तन्तीर्त्थेभ्यऽआन्दंविषमे
भ्योमैनालꣳस्वनेभ्यःपर्ण्णकङ्गुहाभ्यःकिरातꣳसानुभ्यो
जम्भकम्पर्व्वतेभ्यःकिम्पूरुषम् ॥ १६ ॥ बीभत्त्सायैपौ
ल्कसम् ॥ बीभत्त्सायैपौल्कसंव्वर्ण्णायहिरण्यकारन्तुला

१ चर्म्मम्न्नम्। अत्र "ऋषरेभ्यो०" (शु.य.प्रा.३अ.८५सू.) इत्यनेन समानपदे प्राप्तस्य णत्वस्य "इन्द्राग्नी०" (शु.य.प्रा.३अ.९३सू.) इत्यनेन निषेधान्न णत्वम्।

यैवाणिजम्पश्चादोषायग्ग्लाविनंविश्वेभ्योभूतेभ्यःसिद्ध्म
लम्भूत्त्यैजागरणमभूत्त्यैस्वपनमार्त्त्यैजनवादिनंव्यृद्ध्याअपग
ल्भꣳसꣳशरायम्प्रच्छिदम् ॥ १७ ॥ अक्षराजायकित
वम् ॥ अक्षराजायकितवङ्कृतायादिनवदर्शन्त्रेतायैकल्पिनं
न्द्वापरायाधिकल्पिनमास्क्कन्दायसभास्त्थाणुम्मृत्त्यवेगो
व्यच्छमन्तकायगोघातङ्क्षुधेयोगाम्विकृन्तन्तम्भिक्षमाणऽउ
पतिष्ठतिदुष्कृतायचरकाचार्य्यम्पाप्मनेसैलगम् ॥ १८ ॥ प्रति

श्रुत्कायाऽअर्त्तनम् ॥ प्रतिश्रुत्कायाऽअर्त्तनङ्घोषायभषम
न्तायबहुवादिनमनन्तायमूकꣳशब्दायाडम्बराघातम्[1]महसेव्वी
णावादङ्क्रोशायतूणवद्ध्मम[2]वरस्परायꣳशङ्खद्ध्मंव्वनायव्वनप
मन्यतौरण्ण्यायदावपम् ॥१९॥ नर्म्मायपुँश्चलूम् ॥ नर्म्मायपुँश्च
लूꣳहसायकारिँय्यादसेशाबल्याङ्ग्रामण्ण्यङ्गणकमभिक्क्रोश

१ आडम्बराघातम् । अत्र "त आघादनाडम्बरात्" (शु.य.प्रा. ३ अ. ४८ सू.) इत्यनेनानाडम्बरात्परस्य विधानादाघातशब्दघटितस्य तकारस्य मूर्धन्यत्वं (टः) न भवति । २ अवरस्पराय । अत्र "प्रकृत्या कखयोः पफयोश्च" ( शु. य. प्रा. ३ अ. ११ सू.) इति "अवरः" इत्यस्य विसर्गस्य प्रकृतिभावे प्राप्ते "ऋतावरौ च पतिपरयोः" (शु. य. प्रा. अ. ३ सू. ५०) ऋतः अवरश्च शब्दौ सकारेण व्यवधीयेते यथासंख्यं पतिपरयोः । इत्यनेनात्रावरशब्दस्य विसर्गस्य परे पदपरे सत्वे जाते "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन पकारस्य द्वित्वे रूपम् ।

कुन्तान्त्महसेव्वीणावादम्पाणिग्घ्नन्तूणवद्ध्मन्तान्नृत्तायान
न्दायतलवम् ॥२०॥ अग्नयेपीवानम् ॥ अग्नयेपीवानम्पृथिव्यै
पीठसर्प्पिणंव्वायवेचाण्डालमन्तरिक्षायव्वꣳशनर्त्तिनन्दिवेख
लतिꣳसूर्य्यायहर्य्यक्षन्नक्षत्रेभ्यःकिर्म्मिरञ्चन्द्रमसेकिला
समह्नेशुक्लम्पिङ्गाक्षꣳरात्र्यैकृष्णम्पिङ्गाक्षम् ॥२१॥ अथै
तान् ॥ अथैतानष्टौव्विरूपानालभतेतिदीर्घञ्चातिह्रस्वञ्चाति ॥ ९१ ॥

१ अतिस्स्थूलम्। अत्र "भाविभ्यः सः षं समानपदे" (शु. य. प्रा. ३ अ. ५६ क.) इत्यनेन समानपदे स्थूलस्य सस्य षकारे प्राप्ते "अनुसन्तनोतु बृहस्पतिसुतस्य सुसमिद्धाय सुसन्दृशमभिसत्वाऽभिसंविशन्तु सुसस्यातिस्थूलं०" (शु. य. प्रा. अ. ३ सू. ८२) इत्यनेन प्रकृतिभावे न षत्वम्। तत "ऊष्मान्तस्थाभ्यश्च स्पर्शाः" (शु. य. प्रा. ४ अ: १०२ सू.) इति थस्य द्वित्वे चर्त्वे तकारः।

स्त्थूलञ्चातिंकृशञ्चातिंशुक्लञ्चातिंकृष्णञ्चातिंकुल्वञ्चातिंलोम
शञ्च ॥ अशूद्द्राऽअब्ब्राह्मणास्त्तेप्प्राजापत्त्याः ॥ मागधः पुँश्श्च
लीकितवःक्क्लीबोशूद्द्राऽअब्ब्राह्मणास्त्तेप्प्राजापत्त्याः ॥ २२॥
[ १६-२ ] इतिश्रीवाजसनेयसंहितायां त्रिंशत्तमोऽध्यायः
॥ ३० ॥ श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्रम् ॥ सहस्त्र-
शीर्षा षोडश,ञ्चःसंभृतः षट्, द्वौ द्वाविꣳशतिः [ अ. ३१
सं. ५५ मं. २२ अनु. २ ] ॥ हरिःॐ ॥ सहस्त्रशीर्षापुरुषः । सह

स्राक्षःसहस्रपात् ॥ सभूमिꣳसर्वतंस्पृत्वात्त्यतिष्ठद्दशाङ्गु
लम् ॥ १ ॥ पुरुषऽएव ॥ पुरुषएवेदꣳसर्वँय्यद्भूतँय्यच्चभा
व्यम् ॥ उतामृतत्त्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥ एता
वानस्य । महिमातोज्यायाँश्चपूरुषः ॥ पादोस्यविश्वाभूता
निंत्रिपादस्यामृतन्दिवि ॥ ३ ॥ त्रिपादूर्द्ध्वः ॥ त्रिपादूर्द्ध्वऽ
उदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्क्राम



त्साशनानशनेऽअभि ॥ ४ ॥ ततोविराट् ॥ ततोविराडजा

यतव्विराजोऽअधिपूरुषः ॥ सजातोऽअत्त्यरिच्यतपश्चाद्भूमि
मथोपुरः॥५॥ तस्म्माद्यज्ज्ञात्॥ तस्म्माद्यज्ज्ञात्त्सर्व्वहुतः सम्भृं
तम्पृषदाज्ज्यम् ॥ पशूँस्त्ताँश्चक्क्रेव्वायव्यानारण्ण्याग्ग्राम्म्या
श्चये ॥६॥ तस्म्माद्यज्ज्ञात् ॥ तस्म्माद्यज्ज्ञात्त्सर्व्वहुतऽऋचः
सामानिजज्ज्ञिरे ॥ छन्दाᳬंसिजज्ज्ञिरेतस्म्माद्यजुस्त्तस्म्माद
जायत ॥ ७ ॥ तस्म्मादश्श्वाः ॥ तस्म्मादश्श्वाऽअजायन्त
येकेचोभयादतः ॥ गावोहजज्ज्ञिरेतस्म्मात्तस्म्माज्जाताऽअ

जा॒वय॑÷ ॥ ८ ॥ तँ॒ऽयु॒ज्ञम् ॥ तँ॒ऽयु॒ज्ञम्ब॒र्हिषि॒प्प्रौक्ष॒न्त्पुरु॑ष
ञ्जा॒तऽमं॑ग्ग्र॒तः॑ ॥ तेन॑दे॒वाऽअं॑यजन्तसा॒ध्याऽऋष॑यश्श्च॒ये ॥ ९ ॥
यत्पु॒रु॑षम् ॥ यत्पु॒रु॑षं॒व्व्यद॑धुः॒कति॒धाव्व्यं॑कल्पयन् ॥ मुख॒
ङ्किमं॑स्यासी॒त्किम्बा॒हूकिमु॒रूपादा॑ऽउच्च्येते ॥ १० ॥ ब्रा॒ह्म॒
णो॒स्य ॥ ब्रा॒ह्म॒णो॒स्य॒मु॒खं॑मासीद्बा॒हूरा॑ज॒न्न्य॒÷कृ॒तः॑ ॥ ऊ॒रू
तद॑स्य॒यद्वै॑श्श्य॑÷प॒द्भ्याᳪ॑शू॒द्रोऽअं॑जायत ॥ ११ ॥ च॒न्द्रमा॒
मन॑सः ॥ च॒न्द्रमा॒मन॑सोजा॒तश्श्चक्षो॒ः सूर्य्यौ॑ऽअजायत ॥

श्रोत्रांद्वायुश्चंप्प्राणश्चमुखांदुग्निरंजायत ॥ १२ ॥ नाब्भ्यांऽ
आसीत् ॥ नाब्भ्यांऽआसीदुन्तरिंक्क्षᳬंशीष्णोंद्यौश्समंवर्त्त
त ॥ पुद्भ्याम्भूमिर्द्दिशुᳬंश्रोत्रात्तथांलोकाँ२॥ऽअंकल्प्पयन्
॥ १३ ॥ यत्प्पुरुंषेण । हुविषांदेवायुज्ज्ञमतंन्वत ॥ वुसन्तो
स्यासीदाज्ज्यंङ्ग्रीष्म्मऽइद्ध्मश्शुरद्धुविः ॥ १४ ॥ सुप्प्तास्यां
सन् ॥ सुप्प्तास्यांसन्त्पपरिंधयुस्त्रिश्सुप्प्तसुमिधंᳬकृताः ॥ देवा
यद्युज्ज्ञन्तंन्वानाऽअबंद्ध्नन्पुरुंषम्पशुम् ॥१५॥ यज्ज्ञेनंयुज्ज्ञ

म् ॥ य॒ज्ञेन॑य॒ज्ञम॑यजन्तदे॒वास्तानि॒धर्म्मा॑णिप्प्रथ॒मान्या॑
सन् ॥ तेह॒नाकम्म॑हि॒मानः॑सचन्त॒यत्र॒पूर्वे॑सा॒ध्याःसन्ति॑दे॒वाः
॥ १६ ॥ [ १६-१ ] अ॒द्भ्यःसम्भृ॑तः । पृथि॒व्यैरसा॑च्चवि॒
श्वक॑र्म्मणःसम॑वर्त्त॒ताग्रे॑ ॥ तस्य॒त्वष्टा॑वि॒दध॑द्रू॒पमे॑ति॒तन्म
र्त्यस्यदे॒वत्वमा॒जान॒मग्रे॑ ॥ १७ ॥ वेदा॒हम् ॥ वेदा॒हमे॒तम्पु॒
रु॑षम्म॒हान्त॑मादि॒त्यव॑र्ण्ण॒न्तम॑सः[1]प॒रस्ता॑त् ॥ तमे॒ववि॑दि॒त्वा



१ तमसःपरस्तात् । अत्र "तमसोऽपरस्तात्" ( शु. य. प्रा. ३ अ. २६ सू. ) इत्यनेन विधीयमानं सत्वं न भवति तत्रापरस्तादित्युक्तत्वात् ।

तिंमृत्त्युमैतिनान्न्यःपन्थांव्विद्यतेयंनाय ॥ १८ ॥ प्रजापंति
श्चरति ॥ प्रजापंतिश्चरतिगर्ब्भैऽअन्तरजांयमानोबहुधाव्विजा
यते ॥ तस्ययोनिम्परिंपश्श्यन्तिधीरास्त्तस्मिंन्न्हतस्त्थुर्ब्भुव
नानिव्विश्श्वां ॥१९॥ योदेवेब्भ्यं÷ ॥ योदेवेब्भ्यंऽआतपंतियो
देवानांम्पुरोहिंतः ॥ पूर्व्वौंयोदेवेब्भ्योंजातोनमोंरुचायब्ब्राह्मंये
॥ २० ॥ रुचम्ब्राह्मम् ॥ रुचम्ब्राह्ममञ्जनयंन्तोदेवाऽअग्ग्रेत
दंब्ब्रुवन् ॥ यस्त्त्वैवम्ब्राह्मणोव्विद्यात्तस्यंदेवाऽअंसन्वशें ॥ २१ ॥

श्रीश्चं॥ श्रीश्चंतेलक्ष्मीश्चपत्क्न्यांवहारोत्त्रेपार्श्वेनक्क्षत्राणिरूप
मश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मंऽइषाणसर्व्वंलोकम्मंऽ
इषाण ॥ २२ ॥ [६-२]॥ इतिश्रीवाजसनेयसंहितायामे-
कत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ श्रीवेदपुरुषाय नमः ॥ अनु-
वाकसूत्रम्॥ तदेव सप्त, वेनस्तन्नव, द्वौ षोडश [ अ. ३२ मं.
१६ अनु. २ ]॥ हरिःॐ ॥ तदेव ॥ तदेवाग्निस्त्तदादित्त्यस्त्त
द्वायुस्त्तदुचन्द्रमाः ॥ तदेवशुक्क्रन्तद्ब्रह्मताऽआपःसम्प्रजा

पतिं ॥१॥ सर्व्वेनिमेषाः ॥ सर्व्वेनिमेषाजज्ञिरेविद्युतःपुरुषा
दधि ॥ नैनमूर्द्ध्वन्नतिर्य्यञ्चन्नमध्येपरिजग्रभत् ॥ २ ॥ नतस्य ।
प्रतिमाऽअस्तियस्यनाममहद्यशः ॥ हिरण्यगर्भऽइत्त्येष
मामाहिंसीदित्त्येषायस्मान्नजातऽइत्त्येषः ॥ ३ ॥ एषोह ।
देवः प्रदिशोनुसर्व्वाःपूर्व्वोहजातःसऽउगर्भेऽअन्तः ॥ सऽएव
जातःसजनिष्यमाणः प्रत्त्यङ्जनास्तिष्ठतिसर्व्वतोमुखः ॥४॥

---

१ हिरण्यगर्भःसं० चत्वारि० ४ अ. २५ मंत्र १०।११।१२।१३। ॥ १ मामाहिंसीत्. १ अ. १२ मं. १०२ ॥ १ यस्मान्न. १ १ इंद्रश्च. १ अ. ८ मं. ३६ मं. ३७ ॥ इति प्रतीकानि ॥

शु. य. संहि. ॥ १६ ॥

यस्म्मांज्जातम् ॥ यस्म्मांज्जातन्नपुराकिञ्चनैवयऽआंबभूवभुवं उ. वि. अ.

नानिव्विश्श्वां ॥ प्रजापंतिःप्प्रजयांसꣳरराणस्त्रीणिज्ज्योतीꣳषि ॥ ३२ ॥

षिसचतेसषोडुशी ॥ ५ ॥ येनुद्यौः ॥ येनुद्यौरुग्ग्राप्पृंथिवी

चंदृढायेनुस्वःस्तभितँय्येनुनाकः ॥ योऽअुन्तरिक्क्षेरजंसो

व्विमानःकस्म्मैदेवायंहुविषांव्विधेम ॥ ६ ॥ यङ्क्रन्दंसी ॥

यङ्क्रन्दंसीऽअवंसातस्त्तभानेऽअुभ्यैक्क्षेंताम्मनंसारेजंमाने ॥ ॥ १६ ॥

यत्राधिसूरऽउदितोव्विभातिकस्म्मैदेवायंहुविषांव्विधेम ॥

आंपोहयद्बृंहतीर्व्यश्चिदापं÷ ॥७॥ [७-१] वेनस्तत् ॥ वेन
स्तत्पंश्यन्निहितङ्गुहासद्यत्रविश्वम्भवत्येकंनीडम् ॥ तस्मिन्न
न्निदꣳसञ्चविचैतिसर्व्वꣳसऽओतःप्रोतश्चविभूःप्रजासु ॥८॥
प्रतत् ॥ प्रतद्वोचेदमृतन्नुविद्वान्गन्धर्व्वोधामविभृतङ्गुहासत् ॥
त्रीणिपदानिनिहितागुहास्ययस्तानिवेदसपितुःपितासत् ॥९॥
सनः ॥ सनोबन्धुर्ज्जनितासविधाताधामानिवेदभुवनानि

---

१ आपोंह. १ यश्चिंत्. १ अ. २८ मं. २५ मं. २६ इति प्रतीके ॥

व्विश्वा ॥ यत्रंदेवाऽअमृतंमानशानास्तृतीयेधामन्नद्ध्यैरयन्त
॥ १० ॥ परीत्त्यंभूतानि । परीत्त्यंलोकान्परीत्त्यसर्व्वाःप्प्रदि
शोदिशंश्च ॥ उपस्त्थायंप्प्रथमजामृतस्यात्त्मनात्त्मानम
भिसंविवेश ॥ ११ ॥ परिद्यावापृथिवी । सद्यऽइत्त्वापरिलो
कान्परिदिशःपरिस्वः ॥ ऋतस्यतन्तुंव्वितंतंव्विचृत्त्यतदपश्यत्
तदभवत्तदासीत् ॥ १२ ॥ सदसस्प्पतिम् ॥ सदसस्प्पति
मद्भुतम्प्प्रियमिन्द्रस्यकाम्म्यम् ॥ सनिम्मेधामयासिषꣳस्वाहा

॥ १३ ॥ माम्मेधाम् ॥ याम्मेधान्देवगणाः पितरश्चोपासते ॥
तयामामद्यमेधयाग्ग्नेमेधाविनङ्कुरुस्वाहा ॥ १४ ॥ मेधाम्मे ॥
मेधाम्मेव्वरुणोददातुमेधामग्ग्निः प्प्रजापतिः ॥ मेधामिन्द्रश्च
व्वायुश्चमेधान्धाताददातुमेस्वाहा ॥ १५ ॥ इदम्मे ॥ इदम्मे
ब्रह्मचक्क्षत्रञ्चोभेश्रियमश्श्नुताम् ॥ मयिदेवादधतुश्रियमुत्त
मान्तस्यैतेस्वाहा ॥ १६ ॥ [९-२] ॥ इतिश्रीवाजसनेय-
संहितायां द्वात्रिंशोऽध्यायः ॥ ३२ ॥ श्रीवेदपुरुषाय नमः ॥

सं. ५६

अनुवाकसूत्रम् ॥ अस्याजरासः सप्तदश, पश्चित् द्वादश, त्विभ्रा
ट् चतुर्दश, प्रवावृजऽएकादश, प्रवायुं पञ्चदश, प्रवीरया पञ्च
दश,ऽआनस्त्रयोदश, सप्त सप्तनवतिः [ अ. ३३ मं. ९७
अनु. ७ ] ॥ हरिः ॐ॥ अस्याजरासः ॥ अस्याजरासोदमाम्
रित्राऽअर्च्चद्धूमासोऽअग्नयः पावकाः ॥ श्वितीचयः श्वात्रा
सोभुरण्यवोवनर्षदोवायवोनसोमाः ॥ १ ॥ हरंयोधूमके ॥ ९८ ॥

१ वनसदः इति पदम् । अत्र "वनसदोऽवेरो रेफेण" ( शु. य. प्रा. ३ अ. ४८ सू. ) इत्यनेन सदशब्दे परे वनशब्दो रेफेण व्यवधीयते ।

तवᳬ ॥ हरेयोधूमकेतवोवातंजूताऽउपद्यविं ॥ सतंन्तेवृथंग
ग्नयं÷ ॥ २ ॥ सजानᳬ ॥ संजानोमित्रावरुणायजादेवाँ२ ॥ऽ
ऋतम्बृहत् ॥ अग्नेयक्षिस्वन्दमंम् ॥ ३ ॥ सुक्क्ष्वाहि । देव
हूतंमाँ२ ॥ऽअश्वाँ२ ॥ऽअग्नेरथीरिंव ॥ निहोतापूर्व्यश्संदᳬ ॥४॥
द्वेविरूपे । चरतᳬस्वर्थेंऽअन्यान्यांवत्समुपंधापयेते ॥
हरिरन्यस्याम्भवतिस्वधावांञ्छुक्क्रोऽअन्यस्यांन्दद्दृशेसुवर्च्चाᳬ

१ सजानो । अत्र सजशब्दस्य ह्रस्वाकारस्य नः इति नकारे परे "धार्याव स्वेजाव" ( शु. य. प्रा. ३ अ. १०८ सू. ) इत्यनेन दीर्घाकारः।
२ स्वधावाञ्छुक्रः । अत्र "शकारे च" (शु. य. प्रा. ४ अ. ९६ सू.) इत्यनेन शकारे परे तवर्गश्चवर्गं प्राप्नोति । अतः शुक्रस्य शकारे परे स्वधावान् इत्यस्य नकारस्य ञकारः । ततः "परश्चास्पर्शपरश्छम्" (शु. य. प्रा. ४ अ. ९७ सू.) इत्यनेन शकारस्य छकारे कृते "स्वधावाञ्छुक्र" इति ।

॥ ५ ॥ शतम् ॥ १७०० ॥ अयमिह । प्प्रथमोधायिधातृ
भिर्होतायजिष्ठोऽअद्ध्वरेष्ष्वीड्यंः ॥ समप्नवानोभृगवोविरुरु
चुर्व्वनेषुचित्रंविब्भ्वंविशेविशे ॥ ६ ॥ त्रीणिशता । त्रीसहस्रा
ण्यग्ग्निन्त्रिᳪशच्चदेवानवचासपर्य्यन् ॥ औक्षन्घृतैरस्तृणन्ब
र्हिरस्म्माऽआदिद्धोतारन्न्यसादयन्त ॥ ७ ॥ मूर्द्धानन्दिवः ॥
मूर्द्धानन्दिवोऽअरतिम्पृथिव्यावैश्वानरमृतऽआजातमग्ग्निम् ॥
कविᳪसम्म्राजमतिथिञ्जनानामासन्नापात्त्रञ्जनयन्तदेवाः ॥ ८ ॥

अ॒ग्निर्वृ॒त्राणि॑ । जङ्घनद्द्रविण॒स्युर्वि॑प॒न्यया॑ ॥ समि॑द्धᳬशु

क्रऽआहु॑तᳬ ॥९॥ वि॒श्वेभि॑ᳬसो॒म्म्यम् ॥ वि॒श्वेभि॑ᳬसो॒म्म्यम्म

द्ध्वग्न॒ऽइन्द्रे॑णवा॒युना॑ ॥ पिबा॑मि॒त्रस्य॒धाम॑भिᳬ ॥१०॥ आयत् ॥

आयदि॑षेनृ॒पाति॒न्तेज॒ऽआन॒ट्शु॒चिरेतो॒निषि॑क्त॒न्द्यौर॒भीके॑ ॥

अ॒ग्निᳬशर्द्ध॑मनव॒द्यँयुवा॑नᳬस्वा॒द्ध्यञ्ज॑नयत्सू॒दय॑च्च ॥११॥

अग्ने॒शर्द्ध॑ । महते॒सौभ॑गायत॒वद्यु॒म्नान्यु॑त्त॒मानि॑सन्तु ॥

१ पिबामित्रस्य । अत्र "ऋणुतत्विषिघ्रजिभवतपिबेतस्यमतिष्ठरक्षा मकारे" ( शु. य. प्रा. ३ अ. ११७ क.) इत्यनेन मकारे बस्य दीर्घे पिबामित्रस्य ।

सञ्ज्ञास्प्पृत्त्य॑ᳬसुयमृमाकृणुष्व्वशत्त्रूयतामृभितिष्ठ्ठामहाᳬंसि
॥ १२ ॥ त्वाᳬंहि । मन्द्रतंमम्कर्कशोकैर्व्ववृमहेमहिन्नᳬःश्रो
ष्य्यंग्ग्ने ॥ इन्द्रन्नत्त्वाशवंसादेवतांव्वायुम्पृंणन्तिराधंसानृतंमाᳬः
॥ १३ ॥ त्वेऽअंग्ग्ने । स्वाहुतप्प्रियासं÷सन्तुसूरयं÷ ॥ यन्ता
रोयेमृघवांनोजनांनामूर्व्वान्दयंन्तुगोनाम् ॥ १४ ॥ श्रुधिश्श्रु
त्त्कर्ण्ण ॥ श्रुधिश्श्रुत्त्कर्ण्णवह्निभिर्द्देवैरंग्ग्नेसयावंभिᳬः ॥ आसी
दन्तुबर्हिषिमित्त्रोऽअंर्य्यमाप्प्रांतर्य्यावांणोऽअद्ध्वरम् ॥ १५ ॥

व्विश्श्वेषामदितिः ॥ व्विश्श्वेषामदितिर्य्यज्ज्ञियानांव्विश्श्वेषामति
थिर्म्मानुषाणाम् ॥ अग्ग्निर्द्देवानामवऽआवृणानः सुमृडीको
भवतुजातवेदाः ॥ १६ ॥ महोऽअग्ग्नेः । समिधानस्यश
र्म्मण्ण्यनागामित्रेव्वरुणेस्वस्त्तये ॥ श्रेष्ठेस्यामसवितुःसवीम
नितद्देवानामवोऽअद्याव्वृणीमहे ॥ १७ ॥ [ १७-१ ] आप
श्चित् ॥ आपश्चित्त्पिपप्प्युस्त्तर्य्योनगावोनक्क्षन्नृतञ्जरितारस्त्तऽ

१ अद्या वृणीमहे । अत्र "अद्य तं हकारचकारभवतवृणीमहे देवेषु" ( शु. य. प्रा. ३ अ. ११५ सू. ) इत्यनेन अद्य इत्यस्य वृणीमहे परे दीर्घे अद्यावृणीमहे अद्य शब्दस्य दकारस्य स्वरात्सं० इत्यनेन द्वित्वम् ।

इन्द्र ॥ याहिवायुर्न्ननियुतौनोऽअच्छात्त्वᳯहिधीभिर्द्दयसेवि
वाजान् ॥ १८ ॥ गावऽउप ॥ गावऽउपावतावतम्महीयज्ज्ञ
स्यंरप्प्सुदा ॥ उभाकर्ण्णाहिरण्ण्यया ॥ १९ ॥ यदुद्य । सूरऽ
उदितेनागामित्त्रोऽअर्य्यमा ॥ सुवातिसविताभगः ॥ २० ॥
आसुतेसिञ्चतश्श्रियᳯरोदस्योरभिश्श्रियम् ॥ रसादधीतवृष
भम् ॥ तम्प्रत्क्कथायंव्वेनः ॥ २१ ॥ आतिष्ठन्तम्परि ॥ आति



१ तम्प्रत्क्कथा. १ अ. ७ मं. १२ ॥ १ अयंव्वेनः. १ अ. ७ मं. १६ ॥ इति प्रतीके ॥

ष्ठन्तम्परिविश्वेऽअभूषञ्छ्रियोव्वसानश्चरतिस्वरोचिः ॥ महत्त

द्द्वृष्णोऽअसुरस्यनामाव्विश्वरूपोऽअमृतानितस्थौ ॥ २२ ॥

प्रवः ॥ प्रवोमहेमन्दमानायान्धसोर्च्चा[1]व्विश्वा[2]नरायव्विश्वा[3]भुवे ॥

इन्द्रस्ययस्यसुमखंसहोमहिश्रवोनृम्णञ्चरोदसीसपर्य्यतः

॥ २३ ॥ बृहन्नित् ॥ बृहन्निदिद्ध्मऽएषाम्भूरिशस्त्तम्पृथुः

स्वरुः ॥ येषामिन्द्रोयुवासखा ॥ २४ ॥ इन्द्रेहि ॥ इन्द्रेहि

---

१ अर्चांव्विश्वानराय । अत्र "अश्वरश्मिमतिसुमति०" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन विश्वानराय इत्यस्य वकारे परे अर्चशब्दस्य ह्रस्वाकारस्य दीर्घाकारः । २ विश्वानराय । अत्र "नरहामित्रेषु च" (शु. य. प्रा. ३ अ. १०३ सू.) इत्यनेन नरशब्दे परे विश्वशब्दाकारस्य दीर्घाकारो विधीयते । ३ विश्वाभुवे । अत्र "विश्व सहभुवपुषवसुषु" । (शु. य. प्रा. ३ अ. १०२ सू.) इत्यनेन भुवे परे विश्वशब्दाकारस्य दीर्घाकारः ।

मत्त्स्यन्धसोव्विश्श्वेभिःसोमपर्व्वभिः ॥ महाँ२॥ऽअभिष्टिरोज
सा ॥ २५ ॥ इन्द्रोव्वृत्रम् ॥ इन्द्रोव्वृत्रमवृणोच्छर्द्धनीतिःप्प्र
मायिनाममिनाद्वर्प्पणीतिः ॥ अहन्व्यꣳसमुशधग्ग्वनेष्वा
विर्द्धेनाँऽअकृणोद्राम्म्याणाम् ॥ २६ ॥ कुतस्त्वम् ॥ कुतस्त्व
मिन्द्रमाहिनःसन्नेकोयासिसत्पतेकिन्तऽइत्था ॥ सम्पृच्छसे
समराणःशुभानैर्व्वोचेस्तन्नोहरिवोयत्तेऽअस्मे ॥ महाँ२॥ऽइ



१ महाँ२॥ऽइन्द्रोय. १ अ. ७ मं. ४० ॥ १ कदाचन. अ. ८ मं. २ ॥ १ कदाचनप्र. अ. ८ मं. ३ ॥ इति प्रतीकानि ॥

न्द्रोयऽओजंसाकुदाचुनस्त्तरीरंसिकुदाचुनप्प्रयुंच्छसि ॥२७॥
आतत् ॥ आतत्तंऽइन्द्रायवं÷पनन्ताभियऽऊर्वङ्गोमंन्तुन्ति
तृत्त्सान् ॥ सकृत्त्सुँऽय्येपुंरुपुत्त्राम्मुहीᳪंसुहस्त्रंधाराम्बृहुतीन्दुं
दुंक्क्षन् ॥२८॥ इमान्तें ॥ इमान्तेधियम्प्प्रभंरेमुहोमुहीमुस्य
स्त्तोत्त्रेधिषणायत्तंऽआनुजे ॥ तमुंत्त्सुवेचप्प्रसुवेचंसासुहिमि
न्द्रंन्देवासुशवंसामदुन्ननुं ॥२९॥ [१२-२] व्विभ्राड्बृहत् ॥

---

१ "दुदुक्षन्" । अत्र दुधुक्षन् इति पदम् । "दुधुक्षन्धो दकारम्" (शु. य. प्रा. ३ अ. ५५ सू.) इत्यनेन दुधुक्षन् शब्दघटितस्य धकारस्य दकारः ।

व्विभ्राड्बृहत्पिबतुसोम्म्यम्मद्ध्वायुर्द्दधद्यज्ञपतावविह्रुतम् ॥
व्वातंजूतोयोऽअभिरक्क्षतित्त्मनाप्प्रजाः पुपोषपुरुधाव्विराज
ति ॥३०॥ उदुत्त्यम् ॥ उदुत्त्यञ्जातवेदसन्देवंव्वहन्तिकेतवः ॥
दृशेव्विश्श्वायसूर्य्यम् ॥३१॥ येनापावक ॥ येनापावकचक्क्ष
साभुरण्यन्तञ्जनाँ२॥ऽअनु ॥ त्वंव्वरुणपश्श्यसि ॥३२॥ दैव्व्या
वद्ध्वर्य्यू ॥ दैव्व्यावद्ध्वर्य्यूऽआगतंरथेनसूर्य्यत्त्वचा ॥ मद्ध्वा
यज्ञंसमञ्जाथे ॥ तम्प्रत्क्कथायंव्वेनाश्चित्रन्देवानाम् ॥ ३३ ॥

१ तंप्रत्नथा. १ अ. ७ मं. १२ ॥ १ अयंवेनः० १ अ. ७ मं. १६ ॥ १ चित्रंदेवानाम्. १ अ. १३ मं. ४६ ॥ इति प्रतीकानि ॥

आनः॑ ॥ आ नु॒ऽइडा॑भि॒र्वि॒दथे॑सुश॒स्ति विश्वा॑नरः सवि॒ता दे॒वऽ
ए॑तु ॥ अपि॒ यथा॑ युवानो॒ मत्स॑थानो॒ विश्व॒ञ्जग॑दभिपि॒त्वे म॑नी
षा ॥ ३४ ॥ यदुद्य । कच्च॑ वृत्रहन्नु॒दगा॑ऽअ॒भि सू॑र्य्य ॥ सर्व॒
न्तदि॑न्द्र ते॒ वशे॑ ॥ ३५ ॥ त॒रणि॑र्वि॒श्वद॑र्शतः ॥ त॒रणि॑र्वि॒श्वद॑र्श
तो॒ ज्योति॒ष्कृद॑सि सू॑र्य्य ॥ विश्व॒मा भा॑सि रोच॒नम् ॥ ३६ ॥ तत्सू
र्य्य॑स्य । दे॒व॒त्त्वन्तन्म॑हि॒त्त्वम्म॒द्ध्या कर्त्तो॒र्वित॑त॒ꣳ सञ्ज॑भार ॥

---

१ मत्सथ नः इति पदम् । अत्र मत्सथ इत्यस्य थकारस्य ह्रस्वाकारस्य नः इति नकारे परे "धारयाम०" (शु. य. प्रा. ३ अ. १०८ सू.) इत्यनेन दीर्घाकारे मत्सथानः ।

सं. ५७

सुदेदयुक्तहरितं÷सधस्त्थादाद्द्रात्रीव्वासंस्त्तनुतेसिमस्म्मै
॥ ३७॥ तन्मित्रस्यं ॥ तन्मित्रस्यव्वरुणस्याभिचक्क्षेसूर्य्योरू
पङ्कृणुतेद्द्योरुपस्त्थें ॥ अनन्तमन्न्यद्दुशंदस्यपाजं÷कृष्णमन्न्य
द्धरितंसम्भरन्ति ॥ ३८ ॥ बण्ण[1]महान् ॥ बण्णमहाँ२॥ऽअंसि
सूर्य्यबडांदित्त्यमहाँ२॥ऽअंसि ॥ महस्त्तेसतोमंहिमापंन्नस्य
तेद्धादेवमहाँ२॥ऽअंसि ॥ ३९ ॥ बट्सूर्य्य ॥ बट्सूर्य्यश्श्रवंसा



१ अत्र बद्महान् । "पञ्चमे पञ्चमम्" (शु. य. प्रा. ४ अ. १२१ सू.) इत्यनेन पञ्चमे स्पर्शे परे अपञ्चमः स्पर्शः पञ्चमो भवति । इति टस्य णकारे द्वित्वे च रूपम् ।

म॒हाँ२॥ऽअ॑सिस॒त्रादे॑वम॒हाँ२॥ऽअ॑सि ॥ म॒ह्ना दे॒वाना॑मसु॒र्य्यः॒

पु॒रोहि॑तोव्वि॒भुज्ज्योति॒रदा॑भ्यम् ॥४०॥ श्रायन्त॑ऽइव॒सूर्य्यं॑म् ॥

श्रायन्त॑ऽइवसूर्य्यं॒व्विश्वेदिन्द्र॑स्यभक्षत ॥ व्वसू॑नि॒जा॒तेजन॑मा

न॒ऽओज॑सा॒प्प्रति॑भा॒गन्नदी॑धिम ॥४१॥ अ॒द्यादे॑वाः ॥ अ॒द्यादे॑

वा॒ऽउदि॑ता॒सूर्य्य॑स्य॒निर२ँह॑सः॒पिपृ॑तानि॒रव॒द्यात् ॥ तन्नो॑मि॒त्रो

व्वरु॑णोमामहन्ता॒मदि॑ति॒ः सिन्धु॑ः पृथि॒वीऽउ॒तद्यौः ॥ ४२ ॥

---

१ अद्यदेवाः। अत्र "अद्य तं हकारचकारभवत वृणीमहे देवेषु" (शु. य. प्रा. ३ अ. ११५ सू.) इत्यनेन देवाः इति परे दीर्घे अद्यादेवाः। २ पिपृत निरवद्यात् इति पदम्। अत्र तकाराकारस्य निघटितनकारे परे "धारयामः°" (शु. य. प्रा. ३ अ. १०८ सू.) इत्यनेन दीर्घे पिपृतानिरवद्यात्।

शु. य. संहि. ॥१०५॥

उ. वि. अ. ॥ ३३ ॥

आकृष्णेन ॥ आकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतम्म
र्त्यञ्च ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्श्य
न् ॥ ४३ ॥ [ १४-३ ] प्रवावृजे । सुप्प्रयाबर्हिरेषामावि
श्प्पतीवबीरिटऽइयाते ॥ विशामक्तोरुषसंःपूर्वहूतौवायुः
पूषास्वस्त्तयेनियुत्त्वान् ॥ ४४ ॥ इन्द्रवायूबृहस्प्पतिम् ॥
इन्द्रवायूबृहस्प्पतिम्मित्राग्निम्पूषणम्भगम् ॥ आदित्त्या ॥ १०५ ॥

१ प्रववृजै इति पदम्। अत्र "ववृधवृजोः" ( शु. य. प्रा. ३ अ. ११४ सू. ) इत्यनेन वृजे परे वेत्यस्य ह्रस्वाकारस्य दीर्घाकारे प्रवावृजे ।

न्मारुतङ्गणम् ॥ ४५ ॥ व्वरुणꣳप्प्राविता । भुवन्मित्त्रोव्वि

श्वाभिरूतिभिः ॥ करन्तान्नꣳसुराधसꣳ ॥ ४६ ॥ अधि

नꣳ ॥ अधिनऽइन्द्रैषांव्विष्ण्णोसजात्त्यानाम् ॥ इतामरुतोऽ

अश्विना ॥ तम्प्रत्नक्कथायंव्वेनोयेदेवासऽआनऽइडाभिर्व्विश्वेभिꣳ

सोम्म्यम्मद्धोमासश्चर्षणीधृतꣳ ॥४७॥ अग्नऽइन्द्र ॥ अग्नऽ

इन्द्रव्वरुणमित्त्रदेवाꣳशर्द्धꣳप्प्रयन्तमारुतोतव्विष्ण्णो ॥ उभा

---

१ इतमरुतः । अत्र "शृणुतत्विषिभ्रजिभवतपिबेतस्रतिष्ठरक्षा मकारे" ( शु. य. प्रा. अ. ३ सू. ११७ ) इत्यनेन मकारे परे दीर्घे इतामरुतः ।
२ तंप्रत्नक्कथा. अ. ७ मं. १२ ॥ १ अयंव्वेनः. अ. ७ मं. १६ ॥ १ येदेवासः. अ. ७ मं. १९ ॥ १ आनऽइडाभिः. अ. ३३ मं. ३४ ॥ १ विश्वेभिꣳ सोम्म्यम्. अ. ३३ मं. १० ॥ १ ओमासश्चर्षणीधृतः. अ. ७ मं. ३३ ॥ इति प्रतीकानि ॥

नासंत्त्यारुद्द्रोऽअंधग्ग्नाःपूषाभगुंᳬसरंस्वतीजुषन्त ॥ ४८ ॥
इन्द्राग्ग्नीमित्त्रावरुणा ॥ इन्द्राग्ग्नीमित्त्रावरुणादितिᳬस्वः
पृथिवीन्द्याम्मरुतंᳬपर्व्वतॉं२॥ऽअपः ॥ हुवेव्विष्ण्णुम्पूषणम्ब्रह्म
णस्प्पतिम्भगन्नुशᳯसंᳯसवितारमूतये ॥४९॥ अस्म्मेरुद्द्राः ॥
अस्म्मेरुद्द्रामेहनापर्व्वतासोव्वृत्त्रहत्त्येभरंहूतौसजोषांᳬ ॥ यᳬ
शᳯसंतेस्त्तुवतेधायिपज्ज्रऽइन्द्रंज्ज्येष्ठाऽअस्म्मॉं२॥ऽअवन्तुदे
वाः ॥५०॥ अर्व्वाञ्चोऽअद्य ॥ अर्व्वाञ्चोऽअद्याभवतायजत्त्राऽ ॥ १०६ ॥

१ अद्य भवत । अत्र "अद्य तं हकारचकारभवतवृणीमहे देवेषु" (शु. य. प्रा. अ. ३ सू. ११५) इत्यनेन भवतपरे दीर्घे अद्याभव इति ।

आवोहार्द्दिं भयमानोव्ययेयम् ॥ त्राद्ध्वन्नोदेवानिजुरोवृकस्य
त्राद्ध्वङ्कर्त्तादवपदोयजत्राः ॥ ५१ ॥ विश्वेऽअद्य । मरुतोवि
श्वऽऊतीविश्वेभवन्त्वग्नयःसमिद्धाः ॥ विश्वेनोदेवाऽअवसा
गमन्तुविश्वमस्तुद्रविणंवाजोऽअस्मे ॥ ५२ ॥ विश्वेदेवाः ।
शृणुतेमꣳहवम्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठ ॥ येऽअग्निजि
ह्वाऽउतवायजत्राऽआसद्यास्मिन्बर्हिषिमादयद्ध्वम् ॥ ५३ ॥

---

२ उपद्यविष्ठ । "द्यवेश्च" (शु. य. प्रा. अ. ३ सू. ५९) इत्यनेन द्यविशब्दात्परस्य स्थघटितसकारस्य षत्वे ष्टुत्वे "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. अ. ४ सू. १०२) इत्यनेन ठकारस्य द्वित्वम् ।

देवेभ्योहि । प्रथममस्युज्ज्ञयेभ्योमृतत्त्वꣳसुवसिंभागमुत्त
ममम् ॥ आदिद्धामानꣳसवितर्व्यूर्णुषेनूचीनाजीविंतामानुषे
भ्यꣳ ॥ ५४ ॥ [ ११-४ ] प्रवायुम् ॥ प्रवायुमच्छाबृहती
मनीषाबृहद्रंयिंविश्ववारꣳरथप्राम् ॥ द्युतद्यामानियुतꣳपत्त्यं
मानꣳकविःकविमियक्षसिप्रयज्यो ॥५५॥ इन्द्रवायूइमे ।
सुताऽउपप्रयोभिरागंतम् ॥ इन्दवोवामुशन्तिहि ॥ ५६ ॥
मित्रꣳहुवे । पूतदंक्षंवरुणन्नारिशादंसम् ॥ धियंघृताचीꣳसा

धंन्ता ॥५७॥ दस्रोसुवाकंवंः । सुतानासंत्त्याबृंक्तबंर्हिषंः ॥

आयांतᳵरुद्रवर्त्तनी ॥ तंम्प्रत्क्कथायंव्वेनः ॥५८॥ व्विदद्यदीं ॥

व्विदद्यदींसरमांरुग्गणमद्रेर्म्महिपाथंः पूर्व्यᳵसद्ध्यक्कंः ॥

अग्ग्रंन्नयत्त्सुपद्यक्क्षंराणामच्छारवंम्प्रथमाजांनतीगात् ॥५९॥

नहिस्प्पशम् ॥ नहिस्प्पशमविंदन्नन्यमस्म्माद्वैश्वानरात्त्पुरऽ

एतारंमग्ग्नेः ॥ एमैनमवृधन्नमृताऽअमंर्त्त्यंव्वैश्वानरंक्षैत्त्रंजि

१ तंप्रत्क्कथा. अ. ७ मं. १२ ॥ १ अयंव्वेनः. अ. ७ मं. १६ ॥ इति प्रतीके ॥

त्त्यायदे॒वाः॥ ६० ॥ उ॒ग्रावि॑घ॒निना॑ ॥ उ॒ग्राव्वि॑घ॒निना॒मृधऽ

इन्द्रा॒ग्नीह॑वामहे ॥ तानो॑मृडातऽई॒दृशे॑ ॥ ६१ ॥ उपा॑स्म्मै ।

गायतानर॒ᳬपव॑माना॒येन्द॑वे ॥ अ॒भिदे॒वाँ२॥ऽइय॑क्क्षते ॥६२॥

येत्त्वा॑ ॥ हि॒हत्त्यै॑मघव॒न्नव॑र्द्धु॒न्त्ये॒शा॑म्ब॒रेह॑रिवो॒येगावि॑ष्टौ ॥ येत्त्वा॑

नू॒नम॑नु॒मद॑न्ति॒विप्प्राः॒ᳬपिबे॑न्द्र॒सोम॒ᳬसग॑णोम॒रुद्भि॑ः ॥ ६३ ॥

जनि॑ष्ठाऽउ॒ग्रः । सह॑सेतु॒राय॑म॒राय॑म॒न्द्रऽओजि॑ष्ठोबहु॒लाभि॑ ॥१०८॥

---

१ गायत नरः इति पदम् । तकारोत्तरवर्त्तिनो ह्रस्वाकारस्य नकारे परे "धारयाम°"(शु. य. प्रा. ३ अ. १०८ सू.) इत्यनेन दीर्घे गायतानरः इति ।

मानः ॥ अवर्द्धन्निन्द्रम्मरुतश्चिदत्रमाताय्यद्वीरन्दधनद्धनिष्ठा ॥ ६४ ॥ आतु ॥ आतून्नऽइन्द्रवृत्रहन्नस्म्माकमर्द्धमागहि ॥ महान्महीभिरूतिभिः ॥ ६५ ॥ त्वमिन्द्र ॥ त्वमिन्द्रप्प्रतूर्त्तिष्ष्वभिविश्वाऽअसिस्पृधः ॥ अशस्तिहाजनितावि श्वतूरसित्त्वन्तूर्य्यतरुष्ष्यतः ॥ ६६ ॥ अनुते ॥ अनुतेशुष्म्मन्तुरयन्तमीयतुःक्षोणीशिशुन्नमातरा ॥ विश्वास्त्तेस्पृधःश्न

१ आतु न इन्द्रः इति पदम्। तुकारोत्तरवर्तिनो ह्रस्वोकारस्य "धारया म" (शु. य. प्रा. ३ अ. १०८ सू.) इत्यनेन नकारे परे दीर्घे आतून इन्द्र इति।

शु. य. संहि.

थयन्तमुन्न्यवैंवृत्रँरउस्सदिंन्द्रतूर्व्वांसि ॥ ६७ ॥ यज्ज्ञोदेवानांम् ॥ उ. वि. अ.

॥१०२॥ यज्ज्ञोदेवानाम्प्रत्त्येतिसुम्नमादित्त्यासोभवंतामृडयन्तंः ॥ ॥ ३२ ॥

आवोर्व्वाचीसुमतिर्व्ववृत्त्यादुँहोश्चिद्याव्वरिवोवित्तरासंत् ॥ ६८ ॥

अदंब्धेभिंःसवितः । पायुभिष्ट्वँ शिवेभिंरद्यपरिंपाहिनोग

यंम् ॥ हिरंण्ण्यजिह्वःसुवितायनव्यंसेरक्क्षामाकिंर्न्नोऽअघशंँस

सऽईशत ॥ ६९ ॥ [ १५-५ ] प्रवीरया । शुचंयोदद्रिरेवाम ॥१०९॥

---

१ पायुभिः त्वम् । इति पदम् । अत्र "मातृभिरर्चिर्भिः पायुभिर्वरूत्रीः" (शु. य. प्रा. ३ अ. ७९ सू.) इत्यनेन एकाक्षरे पदे परे पायुभिः इत्यस्य विसर्गस्य षत्वे "षात्तथौ मूर्धन्यम्" (शु. य. प्रा. ३ अ. ८० सू.) तस्य टकारे "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इति टस्य द्वित्वम् ।

द्ध्वऽर्य्युभिर्म्मधुमन्तꣳसुतासः ॥ व्वहंव्वायोनियुतोयाह्यच्छापि
बासुतस्यान्धसोमदाय ॥ ७० ॥ गावऽउप ॥ गावऽउपावता
वतम्महीयज्ज्ञस्यरप्सुदा ॥ उभाकर्ण्णाहिरण्ण्यया ॥ ७१ ॥
काव्ययोराजानेषु ॥ काव्ययोराजानेषुक्क्रत्त्वादक्षस्यदुरोणे ॥
रिशादसासधस्त्थऽआ ॥ ७२ ॥ दैव्यावद्ध्वर्य्यू ॥ दैव्यावद्ध्व
र्य्यूऽआगतꣳरथेनसूर्य्यत्त्वचा ॥ मद्ध्वायज्ज्ञꣳसमञ्जाथे ॥ तं

---

१ तंप्रत्नथा. १ अ. ७ मं. १२ ॥ अयंवेनः. १ अ. ७ मं. १६ ॥ इति प्रतीके ॥

म्प्रत्कथायंद्वेनः ॥ ७३ ॥ तिरश्चीनोवितंतः ॥ तिरश्चीनो
वितंतोरश्मिरेषामधःस्विदासी३दुपरिस्विदासी३त् ॥ रेतो
धाऽआसन्महिमानंऽआसन्त्स्वधाऽअवस्तात्प्रयंतिःपरस्ता
त् ॥ ७४ ॥ आरोदंसी ॥ आरोदंसीऽअपृणदास्वंर्म्महज्जा
तँऽयदेनमपसोऽअधारयन् ॥ सोऽअंध्वरायपरिणीयतेकविर
त्योनवाजंसातयेचनोंहितः ॥७५॥ उक्त्थेभिर्वृत्रहन्तंमा ॥ ॥ ११० ॥
उक्त्थेभिर्वृत्रहन्तंमायामंन्दानाचिदागिरा ॥ आङ्गूषैराविवा

सतः ॥ ७६ ॥ उपनः । सूनवोगिरःशृण्वन्त्वमृतस्यये ॥ सुमृडीकाभवन्तुनः ॥ ७७ ॥ ब्रह्माणिमे । मतयःशंसुता सःशुष्ममइयर्त्तिप्रभृतोमेऽअद्रिः ॥ आशासतेप्रतिहर्य्य न्त्युक्त्थेमाहरीवहतस्तानोऽअच्छ ॥ ७८ ॥ अनुत्तमाते । मघवन्नकिर्न्नुनत्त्वावाँ२ऽअस्तिदेवताविदानः ॥ नजायमा नोनशतेनजातोयानिकरिष्याकृणुहिप्रवृद्ध ॥७९॥ तदित् ॥ तदिदासभुवनेषुज्ज्येष्ठंयतोजज्ञऽउग्रस्त्वेषनृम्णः ॥ सद्यो

शु. य. संहि. ॥१११॥

जं॑ज्ज्ञा॒नो॒निरि॑णाति॒शत्रू॒नन॑नु॒यंव्वि॒श्वे॑मद॒न्त्यू॒मा॑ᳫं᳭ ॥८०॥ इ॒माऽ
उं॑त्त्वा । पु॑रूव॒सो॒गिरो॑व्वर्द्धन्तु॒याम॑म॑ ॥ पा॒व॒कव॑र्ण्णा॒ᳫं᳭शुच॑यो
व्वि॒प॒श्चि॒तो॒भिस्त्तोमै॒रनू॑षत ॥ ८१ ॥ य॒स्याय॑म् ॥ य॒स्या॒यंव्वि
श्व॒ऽआ॒र्य्यो॒दास॑ᳬ शेवधि॒पाऽअ॒रिः ॥ ति॒र॒श्चि॒द॒र्य्ये॒रु॒श॒मे॒पवी॑
रवि॒तुभ्ये॒त्त्सोऽअ॑ज्ज्यते॒र॒यिः ॥८२॥ अ॒यᳫं᳭स॒हस्र॑म् ॥ अ॒यᳫं᳭
स॒हस्र॒मृषि॑भि॒ᳫं᳭सह॑स्कृत॒ᳫं᳭स॒मु॒द्रऽइ॑वप॒प्रथे ॥ स॒त्त्यःसोऽअ॑स्य
म॒हि॒मा॒गृ॒णे॒शवो॑य॒ज्ज्ञे॒षु॒व्वि॒प्र॒राज्ज्ये॑ ॥८३॥ अद॑ब्धेभि॒ᳫं᳭सवि

१ पुरूवसः । अत्र "अश्वरश्मिमतिसुमति" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वसः इत्यस्य वकारे परे पुरुशब्दस्य ह्रस्वोकारस्य दीर्घोकारः ।

उ. वि. अ. ॥ २२ ॥ ॥१११॥

तः । पायुभिष्ट्वᳬ शिवेभिरद्यपरिपाहिनोगयम् ॥ हिरण्ण्यजिह्वःसुवितायनव्यंसेरक्षामाकिंर्नोऽअघशᳬसऽईशत ॥ ८४ ॥
[ १५-६ ] आनः ॥ आनोयज्ञन्दिविस्पृशंवायोयाहिसुमन्मभिः ॥ अन्तःपवित्रऽउपरिश्रीणानोयᳬशुक्रोऽअयामिते ॥ ८५ ॥ इन्द्रवायूसुसन्दृशा । सुहवेहहवामहे ॥ यथानः सर्व्वऽइज्जनोनमीवःसङ्गमेसुमनाऽअसत् ॥ ८६ ॥ ऋधगित्था । समर्त्त्यःशशमेदेवतातये ॥ योनूनम्मित्रावरुणावभिष्टयऽ

आचक्क्रेहव्यदांतये ॥ ८७ ॥ आयांतम् ॥ आयांतमुपभूषत
म्मद्धः पिबतमाश्विना ॥ दुग्धम्पयोवृषणाजेन्यावसूमानोम
र्द्धिष्टमागंतम् ॥ ८८ ॥ प्रैतु ॥ प्रैतुब्रह्मणस्पातिःप्प्रदेव्येतुसून
तां ॥ अच्छांवीरन्नर्यम्पङ्क्तिराधसन्देवायज्ञंन्नयन्तुनः ॥ ८९ ॥
चन्द्रमांऽअप्प्सु ॥ चन्द्रमांऽअप्प्स्वन्तरासुपर्णोधावतेदिवि ॥
रयिम्पिशङ्गम्बहुलम्पुरुस्पृहहरिरेतिकनिक्कदत् ॥ ९० ॥ देव
न्देवंवः ॥ देवन्देवंवोवसेदेवन्देवमभिष्टये ॥ देवन्देवहुवेम

व्वाजंसातयेगृणन्तोंदेुव्याधिृया ॥ ९१ ॥ दिुविपृष्ठ३ ॥ दिुवि
पृष्टोऽअंरोचताुग्निर्व्वैश्वानरोबृहन् ॥ क्ष्मयांव्वृधाुनऽओजंसा
चनोंहिताुज्योतिंषाबाधतेुतमः ॥ ९२ ॥ इन्द्राग्नीऽअपा
त् ॥ इन्द्राग्नीऽअपादिुयम्पूर्व्वागांत्पुद्धतींभ्यः ॥ हिुत्वीशि
रोंजिुह्वयाुव्वावंदुच्चरंत्त्रिुंहशत्पुदान्न्यंक्क्रमीत् ॥ ९३ ॥ देुवासोु
हि[1] । ष्म्मामनंवेुसमंन्न्यवोुव्विश्वैसाुकᳬसरांतयः ॥ तेनोंऽ

[1] हिष्ममनवे इति पदम् । अत्र "शृणुतत्विपिध्रजिभवतंपिवेतसतिष्ठरक्षा मकारे" (शु. य. प्रा ३ अ. ११७ सू.) इत्यनेन मकारे स्म इत्यस्याकारस्य दीर्घाकारे विधीयमाने हिष्मामनवे । अत्र मस्य द्वित्वं "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ३ अ. १०२ सू.) इत्यनेन ज्ञेयम् ।

शु. य. संहि. अद्यतेऽअपरन्तुचेतुनोभवन्तुव्वरिवोविदः ॥ ९४ ॥ अपाध ऋ. वि.
॥११३॥ मत् ॥ अपाधमदभिशस्तीरशस्तिहाथेन्द्रोद्युम्न्याभवत् ॥ अ.
देवास्त्तऽइन्द्रसक्ख्यायेमिरेबृहद्भानोमरुद्गण ॥ ९५ ॥ ॥ ३२ ॥
प्रवः ॥ प्रवऽइन्द्रायबृहतेमरुतोब्रह्मार्च्चत ॥ वृत्रꣳहनतिवृत्र
हाशतक्रतुर्व्वज्रेणशतपर्व्वणा ॥ ९६ ॥ अस्येत् ॥ अस्येदि
न्द्रोवावृधेवृष्ण्यꣳशवोमदेसुतस्यविष्ण्णवि ॥ [1]अद्यातमस्यम ॥ ११३ ।

१ अद्यत तस्य इति पदम् । "अद्य तं हकारचकारभवतवृणीमहे देवेषु" (शु. य. प्रा. ३ अ. १६५ सू.) इत्यनेन ह्रस्वतकारे परे अद्याकारस्य दीर्घे अद्यातमस्य इति ।

हि॒मानं॒मा॒यवो॑नु॒ष्टुं॑व॒न्ति॒पू॒र्वथा॑ ॥ इ॒॑मा॒ऽउ॒त्त्वा॒य॒स्या॒यम॒य॒ᳪ

सु॒ह॒स्रंमु॒र्द्धऽऊ॒र्षु॒णः॑ ॥ ९७ ॥ [ १३-८ ] इतिश्रीवाजसनेय-

संहितायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ श्रीवेदपुरुषाय नमः ॥

अनुवाकसूत्रम् ॥ यज्जाग्रतो दश, पञ्चनद्यो दश, सोमोधेनु

न्दश, ऽआकृष्णेन दश, पूषन्तव दश, नतदष्टौ, षडष्टपञ्चा-

---

१ अनुष्टुवन्ति । अत्र "अनोः स्तुवन्त्याम्" ( शु. य. प्रा. ३ अ. ७२ सू. ) इत्यनेन अनोरुपसर्गात्परस्य स्तुवन्तिपदे परे तद्घटितसकारस्य षकारः । तत "ऊष्मान्तस्थाभ्यश्च स्पर्शः" ( शु. य. प्रा. ४ अ. १०२ सू. ) इत्यनेन हकारस्य द्वित्वम् । २ इमाऽउत्त्वा. अ. ३३ मं. ८१ ॥ १ यस्यायम्. मं. ८२ ॥ १ अयᳪसहस्रम्. मं. ८३ ॥ १ ऊर्द्ध्वऽऊषुणः अ. ११ मं. ४२ ॥ इति प्रतीकानि ॥

शत् [अ. ३४ मं. ५८ अनु. ६] ॥ हरिः ॐ ॥ यज्जाग्ग्रं
तहं ॥ यज्जाग्ग्रंतोदूरमुदैतिदैवन्तदुंसुप्तस्यतथैवैति ॥ दूरङ्गम
ञ्ज्योतिंषाञ्ज्योतिरेकन्तन्मेमनंः शिवसंङ्कल्पमस्त्तु ॥ १ ॥
येनकर्म्माणि ॥ येनकर्म्माण्ण्यपसोमनीषिणोयज्ञेकृण्ण्वन्ति
व्विदथेषुधीरांः ॥ यदंपूर्व्वंयक्षमन्तःप्रजानान्तन्मेमनंः
शिवसंङ्कल्पमस्त्तु ॥ २ ॥ यत्प्प्रज्ज्ञानंम् ॥ यत्प्प्रज्ज्ञानंमुत ॥११४॥
चेतोधृतिश्च्चयज्ज्योतिंरन्तरमृतंम्प्रजासुं ॥ यस्म्मान्नऽऋतेकि

ञ्जनकर्म्माँक्क्रियतेतन्मेमनं÷शिवसंङ्कल्पमस्त्तु ॥ ३ ॥ येने
दम् ॥ येनेदम्भूतम्भुवंनम्भविष्ष्यत्त्परिगृहीतमृमृतेंनसर्व्वम् ॥
येनंयज्ञस्त्तायतेंसप्तहोतातन्मेमनं÷शिवसंङ्कल्पमस्त्तु॥४॥
यस्म्मिन्नृचं÷ ॥ यस्म्मिन्नृचःसामयजूॅंषियस्म्मिन्न्प्रतिं
ष्ठितारथनाभाविवाराः ॥ यस्म्मिंश्चित्तॅंसर्व्वमोतंम्प्रजाना
न्तन्मेमनं÷शिवसंङ्कल्पमस्त्तु ॥ ५ ॥ सुषारथिरश्वांनिव ॥
सुषारथिरश्वांनिवयन्मंनुष्ष्यान्नेनीयतेभीशुभिर्व्वाजिनंऽइव ॥

हृत्प्रतिष्ठुन्यदजिरञ्जविष्ठुन्तन्मेमनः शिवसङ्कल्पमस्तु ॥६॥
पितुन्नु । स्तोषम्महोधर्म्मणन्तवीषीम् ॥ यस्येत्रितोव्ध्यो
जंसावृत्रंविपर्व्वमर्दयत् ॥ ७ ॥ अन्विदत् ॥ अन्विदनुमते
त्वम्मन्यासैशन्नस्कृधि ॥ क्रत्वेदक्षायनोहिनुप्रणऽआ
यूंषितारिषः ॥ ८ ॥ शतम् ॥ १८०० ॥ अनुनः ॥ अनु
नोद्यानुमतिर्य्यज्ञन्देवेषुमन्यताम् ॥ अग्निश्चहव्यवाहनोभ
वंतन्दाशुषेमयः ॥ ९ ॥ सिनीवालिपृथुष्टुके ॥ सिनीवालिपृथु

ष्टुकेयादेवानामसिस्वसा ॥ जुषस्वंहुव्यमाहुतम्प्रजान्देविदि
दिड्ढिनः ॥ १० ॥ [ १-१ ] पञ्चनद्यः ॥ पञ्चनद्यःसरस्वती
मपियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधासोदेशेभवत्सरित्
॥ ११ ॥ त्वमग्ने । प्रथमोऽअङ्गिराऽऋषिर्देवोदेवानामभवः
शिवःसखा ॥ तवव्रतेकवयोविद्मनापसोजायन्तमरुतोभ्राा
जदृष्टयः ॥ १२ ॥ त्वन्नः ॥ त्वन्नोऽअग्नेतवदेवपायुभिर्म्म
घोनोरक्षतन्वश्चवन्द्य ॥ त्रातातोकस्यतनयेगवामस्यनिमेषः

सं. ५९

शु. य. संहि. ॥११६॥

रक्षमाणस्त्तवंब्रते॥ १३ ॥ उत्तानायामवं । भराचिकित्त्वा
न्त्सद्यः॒प्प्रवींताव्वृषणञ्जजान ॥ अरुषस्त्तूंपोरुशदस्यपाजऽइडा
यास्प्पुत्त्रोव्वयुनेजनिष्ट ॥ १४ ॥ इडायास्त्त्वा । पदेव्वयन्ना
भांपृथिव्याऽअधि ॥ जातवेदोनिधीमह्यग्ग्नेहव्यायव्वोढवे
॥ १५ ॥ प्रमंन्महे । शवसानायंशूषमाङ्गूषङ्गिर्व्वणसेऽअङ्गिर
स्वत्॥ सुवृक्तिभिंस्त्तुवतऽऋग्ग्मियायार्च्चांमार्क्कन्नरेव्विश्श्रुता
य ॥ १६ ॥ प्रवं÷ ॥ प्रवोमहेमहिनमोभरद्ध्वमाङ्गूष्यंशव

उ. वि. अ. ॥ २४ ॥

॥ ११६ ॥

सानायसामं ॥ येनानःपूर्वौंपितरंः पदज्ज्ञाऽअर्च्चन्तोऽअङ्गिर
सोगाऽअविन्दन् ॥१७॥ इच्छन्तित्त्वा ॥ सोम्म्यासःसखायः
सुन्वन्तिसोमन्दधतिप्प्रयाᳫंसि ॥ तितिक्क्षन्तेऽअभिशंस्त्ति
ञ्जनानामिन्द्रस्त्वदाकश्चनहिप्प्रकेतः ॥ १८ ॥ नतैं । दूरेपरं
माचिद्रजाᳫंस्यातुप्प्रयाहिहरिवोहरिंब्भ्याम् ॥ स्थिरायवृ
ष्णेसवनाकृतेमायुक्ताग्ग्रावाणःसमिधानेऽअग्नौ ॥ १९ ॥

---

१ येन नः इति पदम् । अत्र येनेत्यस्य नकाराकारस्य नः पदे परे "धारयामयोजावसचस्यनुदमोपुजयतोरुष्यरक्षयजयच्छमस्सथपिपृतगायतातुयेन नकारे" ( शु. य. प्रा. ३ अ. १०८ सू. ) इत्यनेन दीर्घाकारे जाते येनानः इति पदम् ।

अषाढँ॒युत्सु । पृतनासुपप्प्रिꣳ[1]स्वर्षामप्सांवृजनस्यगोपाम् ॥
भरेषुजाꣳसुक्षितिꣳसुश्रवसञ्जयन्तन्त्वामनुमदेमसोम ।२०।
[१०-२] सोमोधेनुम् ॥ सोमोधेनुꣳसोमोऽअर्वन्तमाशुꣳ
सोमोवीरङ्कर्मण्यन्ददाति ॥ सादन्न्यंविदत्थ्यꣳसभेयम्पितृ
श्रवणँ॒योददाशदस्मै ॥ २१ ॥ त्वमिमाः ॥ त्वमिमाऽ
ओषधीꣳसोमविश्वास्त्वमपोऽअजनयस्त्वङ्गाः ॥ त्वमाततं ॥ ११७ ॥

१ स्वःसाम् इति पदम् । अत्र "स्वर्धूः साꣳसहयोः (शु. य. प्रा. ३ अ. ४१ सू.) इत्यनेन यथासंख्यं स्वस्य विसर्जनीयस्य साम् पदे परे रेफत्वं सकारस्य च मूर्धन्यषत्वञ्च जातम् ।

न्थोर्व्वन्तरिक्षन्त्वज्ज्योतिषाव्वितमौव्ववर्त्थं ॥२२॥ देवेनं ॥
देवेनंनोमनंसादेवसोमरायोभागꣳसंहसावन्नभियुध्य ॥ मात्त्वा
तंनदीशिषेव्वीर्र्यस्योभयेभ्युꣳष्प्रचिकित्त्सागविष्टौ ॥ २३ ॥
अष्टौव्वि ॥ अष्टौव्व्यंकख्यत्त्ककुभं÷पृथिव्यास्त्रीधन्वयोजंनास
प्तसिन्धून् । हिरण्याक्षꣳसविताद्देवऽआगाद्दधद्रत्क्नांदाशु
षेव्वार्र्याणि ॥ २४ ॥ हिरंण्यपाणिꣳसविता । विचर्षणिरुभे
द्यावांपृथिवीऽअन्तरीयते ॥ अपामींवाम्बाधतेव्वेतिसूर्र्यमभि

